(१) गोरोचनाचूर्णायमानः, (प) क्रकच-क्षत-चन्दन-चोद-धूसरो रेणुरुत्पपात (फ)। अपरिमाण-बल-संघट्ट-समुपचीयमानश्च शनैः शनैः संहरन्निव विश्वमशेषं, अकाल-काल-मेघ-पटल-मेदुरो विस्तारमुपगन्तुमारेभे। (ब)

तेन च क्रमेणोपचीयमानबहलमूर्त्तिना दिग्विजयमङ्गलध्वजेन, रिपु-कुल-कमल-प्रलय-नीहारेण, राजलक्ष्मी-विलास-पटवासचूर्णेन, अहितातपत्र-पुण्डरीक-षण्ड-तुषारेण, (२) सेनाभर-(३) पीड़ित-महीतल-मूर्च्छान्धकारेण, चलच्चल-(४)

---

तेषां मालिकासु राजिषु, गोरोचनाचूर्णायमानः गोरोचनारेणुवदाचरन् दृश्यमान इत्यर्थः। अत्र काव्यगतोपमालङ्कारः।

(फ) क्रकचेति। क्रकचेन करपत्रेण क्षतस्य छेदनवेलायां विहितो यश्चन्दनचोदः चन्दनतरुकाष्ठसक्तुः तद्वत् धूसरः, रेणुमूर्त्तलधूलिः। अत्र लुप्तोपमालङ्कारः।

(ब) अपरीति। किञ्च अपरिमाणबलस्य असंख्यसैन्यस्य संघट्टेन पदसम्मर्द्देन समुपचीयमानो वर्द्धमानः, अतएव अशेषं विश्वं सर्वं जगत् शनैः शनैः, संहरन्निव व्याप्नुवा सङ्कोचयन्निव, अकाले यत् कालं कृष्णवर्णं मेघपटलं तद्वन्मेदुरः सान्द्रः, स रेणुरिति शेषः। अत्र क्रियोत्प्रेक्षालुप्तोपमयोरङ्गाङ्गिभावेन सङ्करः।

(भ) तेनेति। किञ्च, तेन रजसा त्रिभुवनमलङ्कृतम् इत्यन्वयः। अत्र तृतीयैकवचनान्तपदानि रजसेति वक्ष्यमाणस्य विशेषणानि। उपचीयमाना वर्द्धमाना बहला विशाला मूर्त्तिर्यस्य तेन। अतएव दिग्विजयस्य मङ्गलध्वजेन माङ्गलिककेतुदण्डस्वरूपेण, तदुत्थानादिति भावः। अत्र निरङ्गं केवलरूपकमलङ्कारः। रिपुकुलान्येव कमलानि पद्मानि तेषां प्रलये विनाशे नीहारेण तुषारस्वरूपेण, तुषारपातेन पद्मानामिव तन्निपातेन रिपुकुलानां विनाशसूचनादिति भावः। अत्र परम्परितरूपकमलङ्कारः। राजलक्ष्म्या विलासस्य वेशविन्यासस्य पटवासचूर्णं पिष्टातकरेणुः फल्गुरिति यावत् तेन। वीरभोग्या हि राजलक्ष्मीर्वीरभरोत्थितेनैव रेणुनात्मानमलङ्करोतीति भावः। अत्र रजसि पटवासचूर्णत्वारोपः शाब्दः, राजसम्पत्त्यां विलासिस्त्रीत्वारोपस्तु आर्थ इत्येकदेशविवर्त्तिरूपकमलङ्कारः। निरङ्गरूपकमिति केचित् अहितानां शत्रूणां आतपत्राणि छत्राण्येव पुण्डरीकाणि श्वेतपद्मानि तेषां षण्डस्य समूहस्य तुषारो हिमं तेन। अत्र परम्परितरूपकमलङ्कारः। रिपुकुलेत्यादिना विनाशकत्वेन हिमत्वारोपः, अत्र तु आवरकत्वेनेति भेदः। सेनाया भरेण

---

করিয়াছিলেন, তাহার উপরে সেই ধূলিসমূহকে গোরোচনা চূর্ণের ন্যায় দেখা যাইতেছিল; (ফ) এবং করাত দিয়া চন্দনগাছ কাটিবার সময় যে গুঁড়ো বাহির হয়, তাহার মত ধূসরবর্ণ সেই ধূলোগুলি উড়িতে লাগিল। (ব) অকাল সম্ভূত কৃষ্ণবর্ণ মেঘসমূহের ন্যায় ঘনীভূত সেই ধূলিসমূহ, অসংখ্য সৈন্যগণের পদসংঘর্ষে বৃদ্ধি পাইয়া, ধীরে ধীরে সমগ্র ভূমণ্ডলকেই যেন সঙ্কুচিত করিতে করিতে ক্রমে বিস্তার পাইতে আরম্ভ করিল।

(ভ) এবং সেই ধূলিসমূহের বিশালমূর্ত্তি ক্রমে বৃদ্ধি পাইতে লাগিলে সেগুলিকে দিগ্বিজয়ের মাঙ্গলিকধ্বজস্বরূপ দেখা যাইতে লাগিল; আর সেগুলি শত্রুগণরূপ পদ্মবনের

---

(१)···प्रतिसरमालिकासु। (२)···खण्डनतुषारेण। (३) सैन्यभर...। (४) चलच्चलबल...।

जलद-काल-कदम्ब-कुसुमोद्गमेन, दिवसकर-कर-(१) कमल-वनोद्दलन-द्विपयूथेन, गगन-महीतल-प्लावन-प्रलय-पयोधि-पूरेण, त्रिभुवन-लक्ष्मी-शिरोऽवगुण्ठन-पटेन, (भ) महावराह-केशर-निकर-कर्वुरेण, प्रलयानल-धूम-राजि-मांसलेन, (म) पातालतलादिवोत्तिष्ठता, चरणेभ्य इव निर्गच्छता, लोचनेभ्य इव निष्पतता, दिग्भ्य इवागच्छता, नभस्तलादिव पतता, पवनादिवोल्लसता, रविकिरणेभ्य इव सम्भवता, (य) अनपहृतचेतनेन निद्रागमेन, अनवगणित-

पीडितस्य महीतलस्य मूर्च्छा मोहस्तस्य अन्धकारस्तिमिरं तेन। अत्र निरङ्गकेवलरूपकमलङ्कारः। जलदं वर्षं कैन्यमेव जलदकालः प्रावृट् तस्य कदम्बकुसुमोद्गमेन विषमत्वात्। अत्र परम्परितरूपकमलङ्कारः। दिवसकरस्य सूर्यस्य कराः किरणा एव कमलवनानि तेषां उद्दलनं विनाशने द्विपयूथं हस्तिसमूहस्तेन। द्विपयूथं यथा कमलवनानि विनाशयति तथाऽसौ रजोराशिरपि सूर्यकिरणानहृश्यतामयनेन विनाशयति खेति भावः। अत्र पूर्ववदलङ्कारः। गगनमेव महीतलं तस्य प्लावने प्रलयपयोधिपूरस्तेन। अत्रापि पूर्ववदेवालङ्कारः। त्रिभुवनलक्ष्म्या अवगुण्ठनपटस्तेन। अत्र त्रिभुवनशोभायां स्त्रीत्वारोप आर्थः, रजोराशौ तदवगुण्ठनपटत्वारोपस्तु शाब्द इत्यर्कदेशविवर्तिरूपकमलङ्कारः। अत्रापि निरङ्गं रूपकमिति केचित्।

(भ) महेति। महावराहस्य नारायणतृतीयावतारस्य केशरनिकरवत् कर्वुरेण विचित्रवर्णेन। प्रलयानलस्य धूमराजिवत् मांसलेन परिपुष्टेन। अनयोः प्रत्येकं लुप्तोपमालङ्कारः।

(म) पातालेति। पातालतलादुत्तिष्ठतेव मूलादर्शनात्, सैन्यानां चरणेभ्यो निर्गच्छतेव प्रत्येकचरणलग्नत्वात्, सैनिकानां लोचनेभ्यो निष्पततेव तत्रापि लग्नत्वात्, दिग्भ्य आगच्छतेव तासु सर्वास्वेव दर्शनात्, नभस्तलात् पततेव तत्र दृष्टिपथं यावद्दर्शनात्, पवनादुल्लसता वायुतः प्रादुर्भवतेव सर्ववायुप्रवहणात्, तथा रविकिरणेभ्यः सम्भवतेव तत्रापि सर्वत्र दर्शनात्। एषु प्रत्येकवाक्ये क्रियोत्प्रेक्षालङ्कारः। तेन च सर्वतोविसारित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(य) अनपेति। अनपहृता न विलोपिता चेतना चैतन्यं येन तेन, निद्रागमेन निद्राविशेषरूपेण।

তুষার, রাজলক্ষ্মীর বেশবিন্যাসের আবীর, শত্রুগণের ছত্ররূপ পদ্মবনের হিম, সৈন্যগণের পদভরে পরিপীড়িত মহীতলের মূর্চ্ছার অন্ধকার, প্রচলিত সৈন্যরূপ বর্ষাকালের কদম্বপুষ্প, সূর্য্যকিরণরূপ পদ্মবন দলিত করিতে হস্তিসমূহ, আকাশরূপ মহীতল প্লাবন করিতে প্রলয়কালীন সমুদ্রের প্রবাহ এবং ত্রিভুবনলক্ষ্মীর মস্তকাবগুণ্ঠন করিবার বস্ত্রস্বরূপ বিরাজ করিতেছিল; (ম) আর সেই ধূলিসমূহ আদিবরাহের কেশর-সমূহের ন্যায় বিচিত্রবর্ণ এবং প্রলয়াগ্নির ধূমসমূহের ন্যায় পরিপুষ্ট দেখা যাইতেছিল; (য) আর সেই ধূলিগুলি পাতাল হইতে যেন উঠিতেছিল, সৈন্যগণের চরণ হইতে যেন নির্গত হইতেছিল, তাহাদের নয়ন হইতে যেন নিঃসৃত হইতেছিল, সকল দিক্ হইতে যেন আসিতেছিল, আকাশ হইতে যেন পড়িতেছিল, বায়ু হইতে যেন আবির্ভূত হইতেছিল এবং সূর্য্যের কিরণ হইতে যেন উৎপন্ন হইতেছিল; (র) এবং সেই

(१) दिवसकरकमल, दिवसकरकिरणकमल...।

सूर्य्येण (१) अन्धकारेण, अघर्म्मकालोपस्थितेन भूमिगृहेण, अनुदिततारागणनिवहेन बहुलनिशाप्रदोषेण, अपतित-सलिलेन (२) जलधरसमयेन, अभ्रान्त-भुजङ्गेन (३) रसातलेन, (र) हरिचरणेनेव संवर्द्धमानेन त्रिभुवनमलङ्घ्यत रजसा। (ल)

विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोद-

---

रजसो नेत्रनिमीलनहेतुतया निद्रासाम्यं अथ च चेतनानपहरणात्ततो वैशिष्ट्यमिति भावः। अतएवात्र अधिकारूढवैशिष्ट्यरूपकमलङ्कारः। न अवगमितः अस्तगमनादवज्ञातः सूर्य्यो येन तेन, अन्धकारेण तिमिररूपेण। सर्वपदार्थावरणहेतुत्वादन्धकारसाम्यं अथ च सति सूर्य्ये प्रादुर्भावात्ततो वैषम्यमिति भावः। पूर्ववदलङ्कारः। अघर्म्मकाले अर्थाद्ग्रीष्मकाले उपस्थितेन भूमिगृहेण भूगर्भान्तर्गतगृहस्वरूपेण। ग्रीष्मकाले हि लोकैः रविकिरणसन्तापशान्तये भूगर्भगृहमाश्रीयते, रविकिरणनिवारणहेतुतया भूगर्भगृहसाम्यं अथ च अग्रीष्मकाले उपस्थितत्वात्ततो वैषम्यमिति भावः। पूर्ववदलङ्कारः। न उदितस्तारागणानां निवहः समूहो यत्र तेन, बहुलनिशाप्रदोषेण कृष्णपक्षरजनीमुखस्वरूपेण। निविडान्धकारोपगमात् कृष्णपक्षरजनीमुखसाम्यं तारागणानुदयाच्च तद्वैषम्यमिति भावः। पूर्ववदलङ्कारः। ताराणामतिप्राचुर्य्यद्योतनार्थं गणनिवहेति पर्य्यायशब्दद्वयोपादानम्। न पतितं सलिलं वर्षाजलं यत्र तेन, जलधरसमयेन वर्षाकालेन। सूर्य्यावरणाद्वर्षाकालसाम्यं वृष्टिजलाभावाच्च तद्वैषम्यमिति भावः। पूर्ववदलङ्कारः। न भ्रान्ता विचरिताः भुजङ्गाः सर्पा यत्र तेन, रसातलेन पातालस्वरूपेण। गाढ़ान्धकारप्रादुर्भावात् पातालसाम्यं सर्पविचरणाभावाच्च ततो वैषम्यमिति भावः। पूर्ववदेवालङ्कारः।

(ल) हरीति। हरेर्वामनस्य चरणेनेव संवर्द्धमानेन रजसा धूलिना त्रिभुवनं अलङ्घ्यत व्याप्यत। अत्र त्रिभुवनलङ्घनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः पूर्णोपमा चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

(व) विकचेति। क्षीरोदस्य सागरस्य फेनवत् पाण्डुना, नवोदकेन नूतनवृष्टिजलेन, विकचकुवलयवनमिव प्रस्फुटितनीलोत्पलवनमिव, क्षीरोदफेनपाण्डुना क्षितिक्षोदेन धूलिना, गगनतलं अवष्टभ्यमानं आच्छाद्यमानं व्याप्यमानं, अलक्ष्यत लोकैरिति शेषः। अत्र लुप्तोपमासङ्कीर्णा श्रौत्युपमालङ्कारः।

---

ধূলিসমূহ সকলেরই নিদ্রাস্বরূপ হইয়াছিল বটে, কিন্তু কাহারও চৈতন্য হরণ করে নাই; অন্ধকারস্বরূপ প্রাদুর্ভূত হইয়াছিল বটে, কিন্তু সূর্য্যাস্তের পর প্রাদুর্ভূত হয় নাই; ভূতলের অভ্যন্তরস্থিত গৃহস্বরূপ হইয়াছিল বটে, কিন্তু গ্রীষ্মকালে উপস্থিত হয় নাই; কৃষ্ণপক্ষের প্রদোষকালস্বরূপ দেখা যাইতেছিল বটে, কিন্তু নক্ষত্রসমূহ উঠে নাই; বর্ষাকালস্বরূপ হইয়াছিল বটে, কিন্তু বৃষ্টির জল পড়ে নাই; পাতালস্বরূপ বোধ হইতেছিল বটে, কিন্তু সর্পগণ ভ্রমণ করে নাই; (ল) এইরূপ সেই ধূলিসমূহ, বামনদেবের চরণের ন্যায় বৃদ্ধি পাইতে পাইতে ত্রিভুবন ব্যাপ্ত করিয়াছিল।

(ব) নূতন বৃষ্টির জলে যেমন প্রস্ফুটিত নীলোৎপলবন আচ্ছন্ন করে, সেইরূপ ক্ষীরোদ সাগরের ফেনের ন্যায় শুভ্রবর্ণ ভূতলের ধূলিসমূহ গগনতল আচ্ছন্ন করিয়াছে বলিয়া লোকে

---

(१) अनपहृतलोचनेनानवगमितसूर्य्येण। (२) पतितसलिलेन। (३)...भुजङ्गमेन।

फेनपाण्डुना (१) क्षितिक्षोदेन (व)। बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् (श)। दुकूलपट-(२) धवला कदलिकेव कलुषतामाजगाम गगनापगा (ष)। नरपालबलभरमतिगुरुमसहमाना (३) पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण (४) मही (स)। निःशेष-निपीतातपं (५) अन्तर्दह्यमानमिव जलधिजलेषु धूसरित-रवि रथ-ध्वजपटमपतदवनिरजः (ह)। मुहूर्त्तेन च गर्भवासमिव, संहारसागरजलमिव,

---

(श) बहुलेति। बहुलैः रजोभिर्धूलिभिः धूसरितं धूसरवर्णीकृतं, अशिशिरकिरणबिम्बं सूर्य्यमण्डलं, अवचूलचामरमिव ध्वजाग्रलम्बितवस्त्रखण्डं चामरमिव। अत्रोपमालङ्कारः।

(ष) दुकूलेति। दुकूलपटवत् सूक्ष्मवसनवत् धवला, गगनापगा स्वर्नदी मन्दाकिनी, कदलिका तद्दीयपताकेव, कलुषतामाविलतां आजगाम प्राप, तद्रजःसम्पातादिति भावः। अत्र मन्दाकिन्याः कालुष्यप्राप्त्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारो लुप्तोपमाश्रौतोपमाभ्यां सङ्कीर्य्यते।

(स) नरेति। अतिगुरुं अत्यन्तविशालं नरपालबलभरं राजसैन्यभारं असहमाना वोढ़मशक्नुवती मही पृथिवी, भारावतारणार्थं रजोमिषेण धूलिच्छलेन, पुनरमरलोकं स्वर्गं आरुरोहेव, रावणवधादिभारावतारणार्थं पूर्वारोहणवदिति भावः। अत्र सापह्नवा क्रियोत्प्रेक्षालङ्कारः।

(ह) निःशेषेति। धूसरितो धूसरवर्णीकृतो रविरथस्य ध्वजपटः पताका येन तत्, तथा निःशेषेण साकल्येन निपीतो यस्य आतपः सूर्य्यालोको येन तत्, अत एवातपपानात् अन्तर्दह्यमानमिव अभ्यन्तरे सन्तप्यमानमिव सत्, अवनिरजो भूतलधूलिः, जलधिजलेषु अपतत्, सन्तापस्य शीतक्रियायाः शान्तिकरत्वादिति भावः। अत्र तद्धूलेर्जलधिजलेषु पतनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, पदार्थहेतुकं काव्यलिङ्गं, क्रियोत्प्रेक्षा चैषां तेषामङ्गाङ्गिभावेन सङ्करः।

(क्ष) मुहूर्त्तेनेति। किञ्च पृथिवी मुहूर्त्तेन क्षणेनैव गर्भवासं मातुर्गर्भाशयं विवेशेव। इत्थं सर्वत्रान्वय

---

দেখিতেছিল। (শ) সেই ধূলিরাশিতে ধূসরবর্ণ সূর্য্যমণ্ডল, পতাকাবদ্ধ চামরের ন্যায় প্রভাশূন্য হইয়া গেল। (ষ) সূক্ষ্ম বস্ত্রের ন্যায় শুভ্রবর্ণ মন্দাকিনীর জল, সেই সৈন্যগণের পতাকার ন্যায় ধূলিরাশিতে মলিনতা প্রাপ্ত হইল। (স) রাজসৈন্যগণের গুরুতর ভার বহন করিতে অসমর্থ হইয়া পৃথিবী যেন, সেই ভার নামাইবার জন্য ধূলিচ্ছলে পুনরায় স্বর্গে আরোহণ করিতে লাগিল। (হ) সেই ধূলিরাশি সূর্য্য রথের পতাকা ধূসরবর্ণ করিয়া সূর্য্যের সমস্ত কিরণ পান করিয়াছিল বলিয়া অন্তরে যেন দগ্ধ হইতেছিল, তাই সমুদ্রের জলে যাইয়া পড়িতেছিল। (ক্ষ) এবং ক্ষণকালমধ্যে পৃথিবী যেন মাতার গর্ভে, প্রলয়কালীন

---

(१) क्षीरोदपाण्डुना। (२) दुकूलपट्ट...।
(३)...भरमसहमाना। (४) रजोनिभेन। (५)...पीतातपं।

कृतान्तजठरमिव, महाकालमुखमिव, नारायणोदरमिव, ब्रह्माण्डमिव विवेश पृथिवी (ख)। मृन्मय इव बभूव दिवसः पुस्तमय्य इव (१) चकाशिरे ककुभः, (२) रेणुरूपेणेव परिणतमम्बरतलम्, (३) एकमहाभूतमयमिव त्रैलोक्यमासीत्। (क)

अथ निजमदोष्मतप्यमानानां दन्तिनां (४) दिशि दिशि करविवरविनिःसृतैः (५) चरद्भिः क्षीरोद-क्षोद-धवलैः (६) शीकरासारैः कर्णपल्लव-प्रहृति-विसृतेन (७) च विसर्पता दानजलबिन्दुदुर्द्दिनेन, हेषारवविप्रकीर्णैश्च वाजिनां लालाजल-

तद्ग्रसमान्धकारितत्वादिति च भावः। संहारे प्रलयसमये यः सागरस्तज्जलं। ब्रह्माण्डं ब्रह्मकोषं। अत्र प्रत्येकवाक्ये क्रियोत्प्रेक्षालङ्कारः।

(क) मृन्मय इति। दिवसो मृन्मयो मृद्विकार इव बभूव, ककुभो दिशः पुस्तमय्यो धूलिलेपविकारा इव सत्यः चकाशिरे विरेजिरे। अनयोः प्रत्येकं गुणोत्प्रेक्षालङ्कारः। "पुस्तं (क्ली) लेप्यादिशिल्पकर्म…।" इति शब्दकल्पद्रुमः। अम्बरतलं कर्त्तृ, रेणुरूपेण परिणतमिव, अत्र क्रियोत्प्रेक्षालङ्कारः। तथा त्रैलोक्यं कर्त्तृ, एकमहाभूतमयमिव केवलक्षितिमयमिव आसीत्, अन्येषां जलाकाशादीनां धूलिभिस्तिरोहितत्वादिति भावः। अत्रापि गुणोत्प्रेक्षालङ्कारः।

अहो धूलिवर्णनमपहाय यदि तु सेनायाः प्रत्यङ्गमवर्णयिष्यन् तदा स्खलितोऽपि महामनोरममभविष्यत्।

(ख) अथेति। निजमदोष्मणा स्वकीयतेजस्तापेन सन्तप्यमानानां, दन्तिनां हस्तिनां। करविवरविनिःसृतैः, शुण्डाच्छिद्रनिर्गतैः, चरद्भिर्गच्छद्भिः, क्षीरोदक्षोदधवलैः क्षीरोदसागरजलबिन्दुवत् शुभ्रैः शीकरासारैर्जलबिन्दुवृष्टिभिः, तथा, कर्णपल्लवाभ्यां विस्तृतकर्णाभ्यां प्रहृत्या ताड़नेन विसृतं विक्षिप्तं तेन, विसर्पता प्रसरता, दानजलबिन्दूनां दुर्द्दिनेन वृष्ट्या, तथा हेषारवैर्विप्रकीर्णानि विक्षिप्तानि तैः, वाजिनामश्वानां ये लालाजललवा मुखनिर्गतजलबिन्दवस्तेषां जालकैः समूहैश्च, रजसि तस्मिन् धूलिराशौ उपशमिते निवारिते सति। अत्र तैस्ताद्दशरजसामुपशमनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। तथा दिक्षु पुनरपि जात आलोकः प्रकाशो यासु तासु

সমুদ্রের জলে, যমের উদরে, মহাকালের মুখে, নারায়ণের উদরে এবং ব্রহ্ম-কোষের ভিতরে প্রবেশ করিল। (ক) এবং দিনটা যেন মৃত্তিকাময় হইয়া গেল; দিক্‌সমূহ যেন মৃত্তিকালেপময় হইয়া দীপ্তি পাইতে লাগিল; আকাশ যেন ধূলিরূপে পরিণত হইল এবং ত্রিভুবন যেন কেবল পৃথিবীময় হইয়া গেল।

(খ) তদনন্তর স্বকীয় তেজের উত্তাপে উত্তপ্ত হস্তিগণের শুণ্ড হইতে, ক্ষীরোদসাগরের জলবিন্দুর ন্যায় শুভ্রবর্ণ জলবিন্দুসমূহ নির্গত হইয়া সকল দিকে পড়িতে লাগিল; বিশাল কর্ণযুগলের তাড়নে বিক্ষিপ্ত হইয়া মদজলবৃষ্টি, সকল দিকে ছড়াইয়া যাইতেছিল; আবার অশ্বগণের মুখ হইতে হ্রেষারবে বিক্ষিপ্ত হইয়া লালাময় জলবিন্দুসমূহ নির্গত হইতে লাগিল;

(१) प्रस्तमय्य इव। (२) दिशः। (३) अम्बरं। (४) क्वचित् दन्तिनामिति पाठो नास्ति। (५)…निःसृतैः। (६) क्षीरोदधवलैः। (७)… विसृतेन।

लव-जालकैरुपशमिते रजसि, पुनरपि जातालोकासु (१) दिक्षु, सागरसलिलादिव (२) उन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे। (ख)

"युवराज! किं न जितं (३) देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि; का दिशो न वशीकृताः या वशीकरिष्यसि; कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि; कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि; कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि; (ग) के वा न प्रणता राजानः, कैर्न विरचितः शिरसि बाल-कमल-कुड्मल-कोमलः सेवाञ्जलिः, कैर्न (४) मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पादपीठे चूडामणयः, कैर्न प्रतिपन्ना वेत्रयष्टयः, (५) कैर्नोद्धूतानि (६) चामराणि, कैर्नोच्चा-

---

सतीषु, तत् अपरिमाणं असंख्यं बलं सैन्यं, सागरसलिलात् समुद्रजलात् उन्मग्नं उत्थितमिव आलोक्य, उपजातविस्मयो वैशम्पायनः, सर्वतो दत्तदृष्टिः सन् चन्द्रापीडमाबभाषे इत्यन्वयः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ग) युवेति। प्रसाधितानि स्वसाधनेनायत्तीकृतानि। प्रसाधयिष्यसि स्वसाधनेनायत्तीकरिष्यसि। आत्मीकृतानि "सप्त विभागवता धर्म्मा दारा स्थानः कथं जयः।" इत्यादिवचनात् जयेन स्वाङ्कृतानि स्वा-स्वदीकृतानीत्यर्थः।

(घ) क इति। न प्रणताः, देवतारापीडस्याग्रादिति भावः। अपि तु सर्व एव प्रणता इत्यर्थः। एवमग्रेऽपि। एषु प्रश्नवाक्येषु अर्थापत्तिरलङ्कारः। बालं नवं यत् कमलकुड्मलं पद्ममुकुलं तद्वत् कोमलः, सेवा उपासना तदर्थमञ्जलिः सेवाञ्जलिः। अत्रार्थापत्तिपुनरुक्तवदाभासयोरङ्गाङ्गिभावेन सङ्करः। प्रतिबद्धः अलङ्करणाय योजितः हेमपट्टः स्वर्णफलकं येषु तादृशैर्ललाटैः सभाभुवः, न मसृणीकृताः श्लक्ष्णीकृताः। प्रतिपन्ना प्रतिहारिभावेन गृहीताः। उद्धूतानि आन्दोलितानि। किरीटेषु यानि पत्राणि पर्णाकाराश्चा-

---

তাহাতে সেই ধূলিরাশি নিবারিত হইলে এবং পুনরায় সকল দিকে আলোক প্রকাশ পাইলে, সেই অসংখ্য সৈন্য যেন সমুদ্রের জল হইতে উঠিল; এইরূপ দেখিয়া বৈশম্পায়নের বিস্ময় জন্মিল, তখন তিনি সকল দিকে দৃষ্টিপাত করিয়া চন্দ্রাপীড়কে বলিতে লাগিলেন।

(গ) "যুবরাজ! মহারাজাধিরাজ তারাপীড় কি জয় করেন নাই, যাহা তুমি জয় করিবে; কোন্ দিক্ অধিকার করেন নাই, যাহা তুমি অধিকার করিবে; কোন্ দুর্গ আয়ত্ত করেন নাই, যাহা তুমি আয়ত্ত করিবে; কোন্ দ্বীপান্তর আত্মসাৎ করেন নাই, যাহা তুমি আত্মসাৎ করিবে; কোন্ রত্ন উপার্জন করেন নাই, যাহা তুমি উপার্জন করিবে; (ঘ) এবং তাঁহার প্রতাপে কোন্ কোন্ রাজা বা অবনত হ'ন নাই, কোন্ কোন্ রাজা বা আপনার মস্তকে

---

(१) पुनरुपजातालोकासु। (२) सागरादिव। (३) किमजितं किं किमर्जितं। (४) कैन।
(५) वेत्रलताः। (६) उद्धूतानि।

रिता जयशब्दाः, कैषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्म्मला-
स्त्वच्चरण-(१) नख-मयूख-राजयः (च)। एते हि (२) चतुरुदधिजलावगाह-
दुर्ल्ललित-बल-मदावलिप्ता दशरथ-भगीरथ-भरत-दिलीपालर्क-मान्धातृप्रतिमाः
कुलाभिमानशालिनः सोमपायिनो मूर्द्धाभिषिक्ताः पृथिव्यां सर्व्वपार्थिवा रक्षा-
भूतिमिवाभिषेक-पयः-पात-पूतैश्चूड़ामणिपल्लवैरुद्वहन्ति मङ्गल्यां भवच्चरणरजः-

---

त्रानि मकराः स्वनामप्रसिद्धा जलजन्तुविशेषा इव तैः, सलिलधारा इव, निर्म्मलाः, तस्य तारापीड़स्य चरणनखानां मयूखराजयः किरणश्रेणयः, न पीताः नमस्कारकाले न ग्रस्ताः, अपि तु सर्व्वेषामेवेत्यर्थः। अत्र लुप्तोपमा श्रौतीपमा अर्थापत्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(ङ) हे तारापीड़ेन विजिता राजानो भवन्तमपि प्रणिपतन्तीत्याह एत इति। हि तथाहि। चतुर्णां उदधीनां समुद्राणां जलेषु यः अवगाहः द्वीपान्तरविजयगमनार्थमवतरणं तद्देव दुर्ल्ललितं हठकारिता येषां तेषां तथोक्तानां बलानां सैन्यानां मदेन दर्पेण अवलिप्ता दर्पिताः। दशरथादयः प्रसिद्धाः, अलर्को नाम दानशीलः कश्चिद्राजर्षिर्म्महाभारताश्वमेधपर्व्वणि प्रसिद्धः, तत्प्रतिमास्तैस्तुल्याः। कुलाभिमानशालिनो महाकुलोत्पत्त्यहङ्कारविशिष्टाः। सोमपायिनः सोमयागं विधाय सोमरसपायिनो नियतयज्ञानुष्ठायिन इत्यर्थः। मूर्द्धसु अभिषिक्ता राज्यप्राप्तिकाले कृताभिषेकाः, पृथिव्यां सर्व्वपार्थिवाः, अभिषेकपयःपातेन अभिषेकीय-जलसम्पर्केण पूतैः, चूड़ामणिपल्लवैर्विस्तृतचूड़ामणिभिः, रक्षाभूतिमिव रक्षार्थकयज्ञीयभस्मेव, मङ्गल्यां कल्याणकरीं, भवतस्तव चरणयोः रजःसंहतिं धूलिसमूहं उद्वहन्ति नमस्कारकाले धारयन्ति। अत्र तेषां राज्ञां प्राधान्यप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः श्रौतोपमा चानयोरङ्गाङ्गिभावेन सङ्करः।

---

নূতন পদ্মকলিকার ন্যায় কোমল অঞ্জলিপুট স্থাপন করেন নাই; কোন্ কোন্ রাজা বা স্বর্ণ-অলঙ্কৃত নিজ নিজ ললাটদ্বারা (নমস্কার করিয়া করিয়া) সভার ভূমিতল মসৃণ (পালিস) করেন নাই; কোন্ কোন্ রাজা বা নমস্কার করিবার সময় মহারাজ তারাপীড়ের পাদপীঠে আপনাদের চূড়ামণি ঘর্ষণ করেন নাই; কোন্ রাজা বা (প্রতিহারীর ন্যায়) বেত্রযষ্টি ধারণ করেন নাই; কোন্ কোন্ রাজা বা চামর আন্দোলন করেন নাই; কোন্ কোন্ রাজা বা জয়শব্দ উচ্চারণ করেন নাই; এবং মকর যেমন সমুদ্রের জলধারা পান করে, সেইরূপ কোন্ কোন্ রাজারই বা মুকুটের স্বর্ণপত্র-নির্ম্মিত মকরাকার অংশগুলি, মহারাজ তারাপীড়ের চরণ-নখের নির্ম্মল কিরণশ্রেণী পান করে নাই। (ঙ) যে সৈন্যগণ অন্যান্য দ্বীপ জয় করিতে যাইবার নিমিত্ত চারি সমুদ্রের জলে অবগাহন করিয়া অত্যন্ত সাহসিকতা প্রকাশ করিয়াছে, সেই সৈন্যগণের গর্বে গর্বান্বিত এবং দশরথ, ভগীরথ, ভরত, দিলীপ, অলর্ক ও মান্ধাতার তুল্য গুণবান্, কুলগৌরবসম্পন্ন, সোমরসপায়ী ও রাজ্যে অভিষিক্ত পৃথিবীর এই সকল রাজগণ, অভিষেক-জল-সংস্পর্শে পবিত্র আপন আপন চূড়ামণিদ্বারা, যজ্ঞীয় রক্ষাভস্মের

---

(१) त्वच्चरण...। (२) एते हि ते।

संहतिम् (ङ)। एभिरियमादिपर्वतैरिवापरैर्धृता धरित्री, एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते (च)। तथाहि पश्य, (१) यस्यां यस्यां दिशि विक्षिप्यते चक्षुः, तस्यां तस्यां रसातलमिवोद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव वर्षति, दिवस इव सृजति बलानि (छ)। अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारत-समर-संक्षोभस्य (२) अद्य क्षितिः (ज)। एष शिखरदेशेषु (३) परिस्खलित-(४) मण्डलो ध्वजान् गणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूख-

(च) एभिरिति। अपरैः प्रकृतभिन्नैः आदिपर्वतैर्महेन्द्रादिभिः कुलपर्वतैरिव एभिर्वर्णितपूर्वैः राजभिः, इयं धरित्री पृथिवी धृता धारिता रक्षिता च। अत्र जात्युत्प्रेक्षालङ्कारः। आप्लावितानि व्याप्तानि दशानां दिशां अन्तरालानि मध्यभागा यैस्तानि, एतानि दृश्यमानानि अमीषां राज्ञां सैन्यानि च भवन्तं उपासते दिग्विजयसाहाय्याय सहगमनेन सेवन्ते। एतदपि दैवस्य तारापीडस्यैव प्रभावादिति भावः।

(छ) तदेव दर्शयति तथाहीति। रसातलं पातालं कर्त्तृ, बलानि सैन्यानि उद्गिरतीव। सीमादर्शनाभावादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। एवमन्यत्रापि। वसुधा बलानि सूते प्रसवतीव। ककुभो दिशो बलानि वमन्तीव। गगनं कर्त्तृ, बलानि वर्षतीव। दिवसो बलानि सृजति उत्पादयतीव।

(ज) अपरीति। अपरिमितबलभराक्रान्ता क्षितिः, अद्य महाभारते ग्रन्थे व्याख्यातो यः समरः कुरु-पाण्डवयुद्धं स महाभारतसमरः, शाकपार्थिवादित्वान्मध्यपदलोपी समासः, तस्य संक्षोभः सम्मर्दः तस्य स्मरति, इत्यहं मन्ये। तत्तुल्यभराक्रान्तत्वादिति भावः। अत्र मन्ये इत्युपादानाद्वाच्या क्रियोत्प्रेक्षालङ्कारः। संक्षोभस्येति "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी।

(झ) एष इति। शिखरदेशेषु ध्वजानामितोपरिभागेषु परिस्खलितं प्रतिविम्बितत्वात् पतितं मण्डलं यस्य सः, एष मयूखमाली सूर्यः, कुतूहलात् गणयन्निव ध्वजानामिव संख्यां कुर्वन्निव, कदलिकावनान्तरेषु

ন্যায় মঙ্গলকর তোমার চরণ-ধূলিসমূহ বহন করিতেছেন। (চ) অপর কুলপর্ব্বতগণের ন্যায় এই রাজগণই এই পৃথিবীকে রক্ষা করিতেছেন এবং ইঁহাদের এই সৈন্যগণ সকল দিক্ ব্যাপ্ত করিয়া আজ তোমার সেবা করিতেছে। (ছ) তাহাই দেখ,—যে দিকে যে দিকে দৃষ্টিপাত করিবে, সেই সেই দিকেই 'পাতাল যেন সৈন্য উদ্গিরণ করিতেছে, পৃথিবী যেন সৈন্য প্রসব করিতেছে, দিক্সমূহ যেন সৈন্য বমন করিতেছে. আকাশ যেন সৈন্য বর্ষা করিতেছে এবং দিনেই যেন সৈন্য সৃষ্টি করিতেছে' বলিয়া বোধ হইবে। (জ) আমি মনে করি—আজ পৃথিবী, তোমার অসংখ্য সৈন্যের ভারে আক্রান্ত হইয়া মহাভারতবর্ণিত সেই কুরুপাণ্ডবের যুদ্ধ-সঙ্ঘর্ষ স্মরণ করিতেছে। (ঝ) ধ্বজসমূহের উপরিভাগে নিজের প্রতিবিম্ব পতিত হওয়ায় সূর্য্য যেন কৌতুকবশতঃ গণনা করিয়া করিয়া পতাকাসমূহের অভ্যন্তরে ধ্বজগুলি বমন

(१) पश्य पश्य। (२) महाभारतसंक्षोभस्य, महाभारतबलसमरसंक्षोभस्य।
(३) मत्तेभकरटभित्तिशिखरदेशेषु। (४) स्खलित…।

माली (झ)। सर्वतश्च मदजलमुचां करिणामेलापरिमल-सुरभिणि वेणिकावाहिनि मदवारिणि निरन्तरमग्ना (१) निपतित-(२) मधुकर-कुल-कलकल-कलिला (३) कालिन्दी-जल-कल्लोल-कलितेव (४) भाति भूतधात्री (ञ)। सैन्यभरसंक्षोभभयात् (५) सरित इव गगनतलं (६) उत्पतिता आच्छादयन्ति (७) एता दिक्चक्रवालमिन्दुधवला ध्वज-पङ्क्तयः (८) (ट)। सर्वथा चित्रं, यदद्य विघटित-सकल-कुल-शैल-सन्धि-बन्धा (९) सहस्रधः शकली-

---

पताकासमूहान्तरालेषु ध्वजान् स्वर्णवेष्टितोपरिभागान् केतून् वमति उद्गिरतीव। प्रत्येकध्वजोपरिभागे सूर्यमण्डलस्य प्रतिविम्बितत्वात् ते ध्वजाः सूर्येणोड्डीयमाना इव भान्तीति सरलार्थः। अत्र प्रथमा वाच्या क्रियोत्प्रेक्षा द्वितीया च प्रतीयमाना क्रियोत्प्रेक्षा, अनयोरङ्गाङ्गिभावेन सङ्करः। "कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे।" इत्यादि विश्वः।

(ञ) सर्वत इति। किञ्च सर्वतः समन्तात्, मदजलमुचां दानजलस्राविणां करिणां, एलायाश्चन्द्रबालायाः परिमलवत् सौरभवत् सुरभिणि सौरभवति वेणिकावाहिनि प्रवाहेण सञ्चारिणि मदवारिणि, निरन्तरमग्ना निरवकाशं क्लिन्नेत्यर्थः, तथा निपतितस्य तन्मदजलोपरि गतस्य मधुकरकुलस्य भ्रमरसमूहस्य कलकलैः कोलाहलैः कलिला गहना दुष्प्रवेशा, भूतधात्री धरित्री, कालिन्दीजलस्य यमुनाजलस्य कल्लोलैः महातरङ्गैः कलिता व्याप्तेव सती भाति, करिणां मदजलप्रवाहस्य यमुनाजलतुल्यकृष्णवर्णत्वादिति भावः। अत्र एलेत्यत्र लुप्तोपमा, मदजले निरन्तरमग्नत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः। "कलिलं गहनं समे।" इत्यमरः।

(ट) सैन्येति। सैन्यभरसंक्षोभभयात् गगनतलमुत्पतिता उड्डीनाः सरितो नद्य इव एता इन्दुधवला ध्वजपङ्क्तयः दिक्चक्रवालं दिङ्मण्डलं आच्छादयन्ति। अत्र लुप्तोपमासङ्कीर्णा जात्युत्प्रेक्षालङ्कारः।

(ठ) सर्वथेति। चित्रमाश्चर्य्यम्, यदद्य धरित्री, बलभरेण विघटिता विश्लेषिताः सकलानां कुलशैलानां सन्धिबन्धाः संयोगबन्धनानि यस्याः सा तादृशी सती, सहस्रधा न शकलीभवति न खण्डखण्डतां

---

করিতেছেন বলিয়া বোধ হইতেছে। (ঞ) এবং সকল দিকে মদস্রাবী হস্তিগণের, এলাচীর সৌরভের ন্যায় সৌরভযুক্ত মদজল প্রবাহিত হইতেছে, ভ্রমরগণ তাহার উপর পড়িয়া কোলাহল করিতেছে, পৃথিবী সেই মদজলে ঘনভাবে নিমগ্ন হইয়া যমুনার জলতরঙ্গে ব্যাপ্ত হইয়াই যেন বিরাজ করিতেছে। (ট) চন্দ্রের ন্যায় শুভ্রবর্ণ এই সকল ধ্বজসমূহ দিঙ্মণ্ডল আচ্ছাদন করিয়াছে, তাহাতে বোধ হইতেছে যে, কতকগুলি নদী, সৈন্যগণের পদভরে বেদনা পাইবার ভয়েই যেন আকাশে উঠিয়া অবস্থান করিতেছে। (ঠ) সর্ব্বপ্রকারে আশ্চর্য্যের বিষয় এই

---

(१) मदवारिणि मग्ना। (२) निरन्तरनिपतित...। (३)...कलिता, कलङ्ककालिका, ललिता।
(४) कलितेव, कवलितेव। (५) सैन्यसंक्षोभभयात्, धरणिमपहाय।
(६) गगनं। (७) संच्छादयन्ति। (८) विजयपङ्क्तयः। (९) शैलबन्धा।

भवति बलभरेण धरित्री, यद्वा बलभर-पीड़ित-वसुधा-धारण-विधुरा न चलन्ति (१) फणिनां पत्य : फणाभित्तयः।" (ठ)

इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां तृणमय-प्राकार-मन्दिर-सहस्र-सम्बाधां, (२) उल्लासित-धवल-पट-मण्डप-शोभिनीं (३) आवास-भूमिमवाप (ड)। तस्यामवतीर्य्य राजवत् सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभि-नवपितृवियोगजन्मना शोकावेगेनायास्यमानहृदयो दुःखेनात्यवाहयत् (ढ)। अति-वाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन (४)

प्राप्नोति। अत्र शकलीभवनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। बलभरेण पीड़िताया वसुधाया धारणेन विधुरा विह्वलाः, फणिनां पत्यः सर्पराजस्य अनन्तस्य फणाभित्तयो विस्तृतफणामण्डलानि न चलन्ति न स्खलन्ति, तदपि चित्रमित्यर्थः। अत्रापि पूर्ववदलङ्कारः।

(ड) इतीति। वदत एव तस्येत्यनादरे षष्ठी। दिग्विजयतो निवृत्तौ तद्वचनमनादृत्येत्यर्थः। समुच्छ्रितानि अत्युच्चानि अनेकानि तोरणानि बहिर्द्वाराणि यस्यास्तां, तृणमये प्राकारे तन्मध्य इत्यर्थः मन्दिरसहस्रेण च गृहसमूहेन सम्बाधा व्याप्ता तां, उल्लासितेन उत्थापितेन धवलेन पटमण्डपशतेन वसनमयगृहसमूहेन शोभत इति तां, आवासभूमिं पूर्वनिर्म्मितनिवासस्थानम्।

(ढ) तस्यामिति। सर्वाः क्रियाः सैन्यपर्य्यवेक्षणसेनापतिसम्भाषणनियोगादीः। समेत्य मिलित्वा। विनोद्यमानः प्रसाद्यमानः। अभिनवात् पितृवियोगात् जन्म यस्य तेन। आयास्यमानं सन्ताप्यमानं हृदयं यस्य स चन्द्रापीडः, अशेषं सकलं तं दिवसं दुःखेनात्यवाहयत्।

(ण) अतीति। किञ्च अतिवाहितदिवसश्चन्द्रापीडः। स्वशयनीयस्य निजशय्यायाः, नातिदूरे निहितं

যে, সৈন্যগণের পদভরে সমস্ত কুলপর্ব্বতগণের সন্ধিবন্ধন বিশ্লেষিত হওয়ায় পৃথিবী আজ সহস্র খণ্ডে বিভক্ত হইয়া যাইতেছে না এবং সৈন্যগণের পদভরে পরিপীড়িত পৃথিবীর ধারণে বিহ্বল হইয়া অনন্তনাগের ফণাগুলি, স্থানচ্যুত হইতেছে না।"

(ড) বৈশম্পায়ন এইরূপ বলিতেছিলেন, এই অবস্থায় যুবরাজ চন্দ্রাপীড়, পূর্ব্বনির্দ্দিষ্ট বাসস্থানে যাইয়া উপস্থিত হইলেন ; সে স্থানের বাহিরের দ্বারগুলি অত্যন্ত উচ্চ ছিল, তৃণময় প্রাচীরের মধ্যস্থল বহুসংখ্যক মন্দিরে পরিপূর্ণ ছিল এবং উত্তোলিত বহুসংখ্যক শুভ্রবর্ণ পটমণ্ডপে (তাঁবুতে) সে স্থানটি শোভা পাইতেছিল। (ঢ) চন্দ্রাপীড় সেই বাসস্থানে হস্তিনীর পৃষ্ঠ হইতে অবতরণ করিয়া রাজার ন্যায় সকল কার্য্য সম্পাদন করিলেন, এবং সেই সকল রাজগণ ও মন্ত্রিগণের সহিত মিলিত হইয়া নানাবিধ কথোপকথনে আনন্দ অনুভব করিতেছিলেন বটে, কিন্তু নূতন পিতৃবিয়োগবশতঃ শোকাবেগে হৃদয় সন্তপ্তও হইতেছিল, তাই তিনি দুঃখেতেই সেই সমস্ত দিনটা অতিবাহিত করিলেন। (ণ) দিন অতিবাহিত করিলে পর রাত্রিতে নিজের

(१) दलन्ति। (२)...मन्दिरसम्बाधां। (३)...सं शोभिनीं। (४) नातिदूरनिषण्णेन।

वैशम्पायनेन, अन्यतश्च समीपे (१) क्षितितल-विन्यस्त-(२) कुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्ताम्, अन्तरा मातृसम्बद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापं नात्युपजातनिद्रः (३) प्रायेण जाग्रदेव निन्ये (ण)। प्रत्यूषे (४) चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन् वसुन्धराम्, आकम्पयन् गिरीन्, उत्सिञ्चन् (५) सरितः, रिक्तीकुर्वन् सरांसि, चूर्णयन् काननानि, समीकुर्वन् विषमाणि, दलयन् दुर्गाणि, पूरयन् निम्नानि, निम्नयन् स्थलानि प्रातिष्ठत (६) (त)।

---

...यापितं यत् शयनं शय्या तत्र निषण्णेन स्थितेन। अन्यतः स्वशय्यायाः अन्यस्मिन् पार्श्वे। क्षितितले विन्यस्तं यत् कुथं विचित्रकम्बलं तस्मिन् प्रसुप्ता शयिता तया पत्रलेखया च सह। अन्तरा मध्ये मध्ये। पितरि तारापीड़े सक्तं सम्बन्धं। शुकनासमयं तद्विषयकं आलापं कुर्वन्। न अतिरिक्तेण उपजाता निद्रा यस्य सः, अतएव प्रायेण बाहुल्येन जाग्रदेव सन् यामिनीमपि तां रात्रिमपि निन्ये यापयामास।

(त) प्रत्यूष इति। अनवरतप्रयाणकैरविश्रान्तप्रस्थानैः। प्रतिप्रयाणकं प्रतिदिवसीयप्रस्थानसमय इत्यर्थः। उभयत्राप्यत्रार्थे कप्रत्ययः। उपचीयमानेन वर्द्धमानेन, तत्तद्देशीयाधीनभूपतिभिः स्वसैन्यसम्मेलनादिति भावः। सेनासमुदायेन वाहिनीसमूहेन। जर्जरयन् जर्जरां कुर्वन् भरेण परिपीडयन्नित्यर्थः। उत्सिञ्चन् जलोत्तोलनेनाल्पजलाः कुर्वन्। रिक्तीकुर्वन् पानाद्यर्थजलानयनादिना जलशून्यीकुर्वन्। विषमाणि उच्चावचानि स्थलानि समीकुर्वन्। दुर्गाणि दुर्गमाणि मार्गवर्त्तिपर्वतादिस्थलानि, दलयन् ध्वंसयन्। निम्नानि मार्गवर्त्तिगर्त्तादीनि पूरयन् मृत्तिकादिभिः समीकुर्वन्। स्थलानि मृत्तिकास्तूपादीनि, निम्नयन् समीकरणायापेक्षिकनिम्नानि कुर्वन्। यानवाहनादीनामनायासेन गमनार्थमिति सर्वत्र भावः। प्रातिष्ठतेति "समवप्रविभ्यः" इत्यात्मनेपदम्।

---

শয্যার অনতিদূরে সংস্থাপিত একখানি শয্যার উপরে বৈশম্পায়ন অবস্থান করিতে লাগিলেন এবং নিকটেই অপর পার্শ্বে ভূতলে একখানি বিচিত্র কম্বল পাতা ছিল, পত্রলেখা তাহার উপরে শয়ন করিয়াছিল, এই অবস্থায় চন্দ্রাপীড় তাহাদের সহিত মধ্যে মধ্যে পিতার সম্বন্ধে, মধ্যে মধ্যে মাতার সম্বন্ধে এবং মধ্যে মধ্যে শুকনাসের সম্বন্ধে কথোপকথন করিতে লাগিলেন, তাহাতে অধিক নিদ্রা হইল না, প্রায়শই জাগিয়া রহিলেন—এই ভাবে সেই রাত্রিও অতিবাহিত করিলেন। (ত) প্রভাতকালে গাত্রোত্থান করিয়া সেই ভাবেই অবিশ্রান্ত গমন করিতে লাগিলেন; প্রত্যেক দিন প্রস্থান করিবার সময়ে নূতন নূতন সৈন্য আসিয়া যোগ দিতে লাগিল, তাহাতে নিজের সৈন্য অত্যন্ত বৃদ্ধি পাইল, সেই সৈন্যসমূহদ্বারা পৃথিবীকে জর্জরিত করিয়া, পর্ব্বত কাঁপাইয়া, নদী সেচিয়া, জলাশয়গুলিকে জলশূন্য করিয়া, বন ভাঙ্গিয়া, উচু নীচু

---

(१) शयनीयसमीपे। (२) क्षितितले विन्यस्त...। (३) नातिजातनिद्रः।
(४) प्रत्यूषसि। (५) उपसिञ्चन्। (६) प्रतिष्ठता।

शनैः शनैश्च स्वेच्छया परिभ्रमन्, नमयन्नुन्नतान्, उन्नमयन्नवनतान्, (१) आश्वासयन् भीतान्, रक्षन् शरणागतान्, उन्मूलयन् विटपकान्, उत्सादयन् कण्टकान्, अभिषिञ्चन् स्थानस्थानेषु राजपुत्रान्, समर्जयन् रत्नानि, प्रतीच्छन्नुपायनानि, गृह्णन् करान्, आदिशन् देशव्यवस्थाः, (२) स्थापयन् स्वचिह्नानि, कुर्वन् कीर्त्तनानि, लेखयन् शासनानि, पूजयन्नग्रजन्मनः, प्रणमन् मुनीन्, पालयन्नाश्रमान्, जनयन् (३) जनानुरागम्, प्रकाशयन् विक्रमम्, आरोपयन् प्रतापम्, उपचिन्वन् यशः, विस्तारयन् गुणान्, प्रख्यापयन्

(ख) विजयप्रकारमाह शनैरिति। उन्नतान् धनबलदर्पोद्धतान् नृपतीन्, नमयन् विजयेनावनतीकुर्वन्। अवनतान् स्वयमेव वशीभूतान् नृपतीन्, उन्नमयन् दानमानादिना वर्द्धयन्। विटपकान् धूर्त्ताधिपान्। कुत्सायां कप्रत्ययः। "विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना" इति मेदिनी। कण्टकान् क्षुद्रशत्रून्। "रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्।" इति त्रिकाण्डशेषः। उपायनानि वशीभूतनृपतिदत्तोपहारद्रव्याणि, प्रतीच्छन् स्वीकुर्वन्। देशव्यवस्थाः देशशासननियमान् आदिशन् आयत्तीभूतनृपतिभ्य इत्यर्थः। स्वचिह्नानि स्वकीयविजयचिह्नानि स्तम्भादीनि। कीर्त्तनानि आत्मनो विजयघोषणाः। शासनानि अधीनतासूचकलेख्यपत्राणि, लेखयन् विजितनृपतिभिरिति शेषः। अग्रजन्मनो ब्राह्मणान्। आश्रमान् ब्रह्मचर्य्यादीन्। आरोपयन् प्रवर्त्तयन्। उपचिन्वन् सदाचारादिना प्रवर्द्धयन्। वेलावनानि समुद्रतीरवर्त्तीन्यरण्यानि आक्रमन् सम्यगुल्लङ्घयन्। "वेला काले च सीमायामब्धेः कूलविकारयोः।"

জায়গা সমান করিয়া, দুর্গম পর্ব্বতগুলিকে ধ্বংস করিয়া, হ্রদগুলিকে পূরণ করিয়া, মৃত্তিকাস্তূপ নিম্ন করিয়া প্রস্থান করিতে লাগিলেন।

(খ) চন্দ্রাপীড় এই ভাবে ইচ্ছানুসারে ধীরে ধীরে পরিভ্রমণ করতঃ, বলগর্ব্বে গর্ব্বিত রাজগণকে বশীভূত করিলেন, আপনা হইতেই অবনত রাজগণকে দানমানাদিদ্বারা উন্নত করিলেন, ভীত রাজগণকে আশ্বস্ত করিলেন, শরণাগত রাজগণকে রক্ষা করিলেন, ধূর্ত্তনায়কগণকে উন্মূলিত করিলেন, ক্ষুদ্র শত্রুগণকে উৎসন্ন করিলেন, স্থানে স্থানে রাজপুত্রদিগকে অভিষিক্ত করিলেন, বহুতর রত্ন উপার্জ্জন করিলেন, বশীভূত রাজাদের নিকট হইতে উপহার গ্রহণ করিলেন, কর আদায় করিলেন, বিজিত দেশ-সমূহে শাসনের নিয়মপদ্ধতি বলিয়া দিলেন, স্থানে স্থানে নিজের বিজয়চিহ্ন স্থাপন করিলেন, সকল দেশেই আপনার জয় ঘোষণা করিলেন, বিজিত রাজগণদ্বারা অধীনতাসূচক শাসনপত্র (দলিল) লেখাইয়া লইলেন, ব্রাহ্মণদিগের সম্মান করিলেন, মুনিগণকে নমস্কার করিলেন, আশ্রমগুলির রক্ষার ব্যবস্থা করিলেন, আপনার প্রতি লোকের অনুরাগ জন্মাইলেন; সকল দেশেই বিক্রম প্রকাশ করিলেন, প্রভাব খাটাইলেন, যশ বৃদ্ধি করিলেন, গুণ বিস্তার করিলেন, সচ্চরিত্র বিখ্যাত করিলেন এবং সমুদ্রের তীরবর্ত্তী বনগুলিকে

(१) उन्नतान् नमयन् इतिमात्रः पाठः क्वचित्।

(२)···व्यवस्था। (३) क्वचित् जनयन् इति पाठो नास्ति।

सञ्चरितम्, (१) आमृद्नंश्च (२) वेलावनानि, बलरेणुभिराधूसरीकृत-सकल-सागरसलिलः पृथिवीं विचचार (थ)। प्रथमं प्राचीम्, ततस्त्रिशङ्कुतिलकाम्, ततो वरुणलाञ्छनाम्, अनन्तरञ्च सप्तर्षितारागबलां दिशं विजिग्ये (३) (द)। एवं (४) वर्षत्रयेण चात्मीकृताशेषद्वीपान्तरं सकलमेव चतुरम्भोधि (५) खात-वलय-परिखा-प्रमाणं बभ्राम महीमण्डलम् (ध)। ततः क्रमेणावजित-(६) सकल-भुवन-तलः प्रदक्षिणीकृत्य वसुधां (७) परिभ्रमन्, कदाचित् कैलास-समीपचारिणां हेमकूटधाम्नां (८) किरातानां सुवर्णपुरं नाम निवासस्थानं

इत्यादि मेदिनी। बलरेणुभिः सैन्योत्थापितधूलीभिः आधूसरीकृतानि तीरविचरणकाले सम्यग् धूसवर्णीकृतानि सकलानां सागराणां सलिलानि येन स तादृशश्चन्द्रापीडः।

(द) प्रथममिति। प्रथमं प्राचीं पूर्वां दिशं विजिग्ये विजितवान्। त्रिशङ्कुसदाख्यो राजा तिलक इव यस्यां तां, दक्षिणां दिशम्। त्रिशङ्कुर्नाम राजा स्वर्गमारोहन् देवराजेन दक्षिणस्यां दिश्यधःक्षिप्त इति रामायणवार्त्ता। वरुणो लाञ्छनं अधिपतितया चिह्नं यस्यां तां, पश्चिमां दिशम्। सप्तर्षितारामि-र्नक्षत्रात्मकमरीच्यादिसप्तर्षिभिः शबलां विचित्रां उत्तरां दिशं। तथा च वृहत्संहितायां—"एकैकस्मिन् ऋक्षे शतं शतं ते चरन्ति वर्षाणाम्। प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः।"

(ध) वर्षेति। आत्मीकृतानि स्वत्वास्पदीकृतानि अशेषाणि समस्तानि द्वीपान्तराणि यस्य तत्, तथा चतुर्णामम्भोधीनां समुद्राणां खातवलयं खाताग्रमण्डलमेव परिखा तया प्रमाणं परिमाणं यस्य तत् तथोक्तं सकलमेव महीमण्डलं बभ्राम। अभ्यन्तरवर्त्तिस्थानविशेषपरित्यागशङ्कानिरासार्थं सकलपदमिति नाधिकपदत्व-दोषः।

(न) तत इति। हेमकूटोनाम हिमालयादुत्तरस्थितः पर्वतविशेषो धाम आश्रयो येषां तेषां, किरा-तानां म्लेच्छविशेषाणां। पूर्वजलनिधेः पूर्वसमुद्रात् नातिविप्रकृष्टं अनतिदूरवर्त्ति। जयाद्ध आयत्तीकृतवान्।

মর্দ্দিত করিলেন ; এই ভাবে সৈন্যগণের পদভরে উত্থিত ধূলিরাশিদ্বারা সকল সমুদ্রের জল ধূসরবর্ণ করিয়া সমগ্র পৃথিবী বিচরণ করিলেন। (দ) প্রথমে পূর্ব্বদিক্, তাহার পর ত্রিশঙ্কু-শোভিত দক্ষিণদিক্, তাহার পর বরুণ-চিহ্নিত পশ্চিমদিক্ এবং তদনন্তর নক্ষত্ররূপি-সপ্তর্ষি-শোভিত উত্তরদিক্ জয় করিলেন। (ধ) এই ভাবে তিন বৎসরে অন্যান্য সকল দ্বীপ আয়ত্ত করিয়া চারি সমুদ্রের খাতরূপ পরিখাদ্বারা পরিমিত সমগ্র পৃথিবীমণ্ডলই পরিভ্রমণ করিলেন। (ন) তাহার পর ক্রমশঃ সমগ্র ভুবনমণ্ডল জয় করিয়া, পৃথিবী প্রদক্ষিণ করিয়া, পরিভ্রমণ করতঃ, সুবর্ণপুরনামে একটি স্থান জয় করিয়া আয়ত্ত করিলেন ; সেই সুবর্ণপুর, কৈলাসপর্ব্বতের নিকটে বিচরণকারী হেমকূটপর্ব্বতনিবাসী ম্লেচ্ছগণের বাসস্থান ছিল এবং পূর্ব্বসমুদ্র হইতে

(१) उद्योतयन् पौरुषं इति क्वचिदधिकः पाठः। (२) आधुन्वन् वेला, आमर्द्दयंश्च वेला…।
(३) जिग्ये। (४) क्वचित् एवमिति नास्ति। (५) चतुरुदधि…। (६) निर्जित, आवर्जित…।
(७) वसुन्धरां। (८) हेमजकूटनाम्नां, हेमजटनाम्नां, हेमजटानाम्नां।

नातिविप्रकृष्टं (१) पूर्वजलनिधिं जित्वा जग्राह ( न )। तत्र च निखिल-धरणितल-( २ ) पर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान् दिवसानतिष्ठत्। ( प )

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतः (३) विचरन् कानने (४) शैलशिखरादवतीर्णं (५) यदृच्छया किन्नरमिथुनमद्राक्षीत् ( फ )। अपूर्वदर्शनतया तु (६) समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पित-तुरगः (७) समुपसर्पन्, (८) अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितञ्च तत् पलायमानमनुसरन्, अनवरतपार्ष्णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेन एकाकी निर्गत्य निजबल-(९) समूहात् सुदूरमनुससार (१०) ( ब )। "अत्र ग्रहीष्यामि अत्र ग्रहीष्यामि

---

( प ) तत्रेति। किञ्च तत्र सुवर्णपुरे। निखिलधरणितलपर्यटनेन खिन्नस्य परिश्रान्तस्य।

( फ ) एकदेति। यदृच्छया स्वाधीनभावेन स्वेच्छया विचरदिति शेषः। किन्नरमिथुनं तुरङ्गवदनदम्पती, अद्राक्षीत् युवराज इत्यनुकृष्यते।

( ब ) अपूर्वेति। अपूर्वं पूर्वमकृतं दर्शनं यस्य तस्य भावस्तया हेतुना। उपसर्पितः सञ्चालितस्तुरगो येन सः। अदृष्टपूर्वस्य पुरुषस्य मानुषस्य चन्द्रापीडस्य दर्शनेन यस्त्रासो भयं तेन प्रधावितं वेगेन चलितं, तत् किन्नरमिथुनं। अनवरतं यः पार्ष्णिप्रहारः पादमूलाभ्यां ताड़नं तेन द्विगुणीकृतो जवो वेगो यस्य तेन। "पार्ष्णिः कुभ्यां चमूपृष्ठे पादमूलोन्मदस्त्रियोः।" इति हेमचन्द्रः।

( भ ) अत्रेति। अत्र द्विविपदान्तरस्थाने, ग्रहीष्यामि मया इदं किन्नरमिथुनमिति शेषः। इति अनया

---

অধিক দূরবর্ত্তী ছিল না। ( প ) সমস্ত পৃথিবী পর্যটন করায় সৈন্যগণ পরিশ্রান্ত হইয়াছিল, সুতরাং চন্দ্রাপীড় সেই সুবর্ণপুরে কয়েক দিন বিশ্রাম করিবার নিমিত্ত অবস্থান করিলেন।

( ফ ) সেই সুবর্ণপুরে থাকিবার সময়েই একদিন চন্দ্রাপীড় ইন্দ্রায়ুধে আরোহণ করিয়া মৃগয়া করিবার নিমিত্ত নির্গত হইয়া বনমধ্যে বিচরণ করিতে করিতে দেখিতে পাইলেন যে, দুইটি কিন্নর পর্ব্বতের শৃঙ্গ হইতে নামিয়া ইচ্ছানুসারে বিচরণ করিতেছে। ( ব ) তাহাদিগকে পূর্ব্বে কখনও দেখেন নাই বলিয়া তাঁহার কৌতূহল জন্মিল এবং ধরিবার ইচ্ছা হইল, তাই তিনি যত্নপূর্ব্বক অশ্বচালনা করিয়া সেই কিন্নরদম্পতীর নিকট যাইতে লাগিলেন; এদিকে তাহারাও সেই প্রথম মনুষ্য দর্শন করিয়া ভয়ে দ্রুতবেগে পলায়ন করিতে লাগিল, চন্দ্রাপীড়ও তাহাদের পশ্চাৎ পশ্চাৎ যাইতে লাগিলেন, এই ভাবে তিনি, অবিশ্রান্ত গুল্ফপ্রহার করায় দ্বিগুণবেগবান্ ইন্দ্রায়ুধে আরোহণ করিয়া একাকী নির্গত হইয়া নিজ সৈন্যগণ হইতে বহুদূরে যাইয়া পড়িলেন। ( ভ ) 'এইখানেই ধরিব, এইখানেই ধরিব, এই ধরিয়াছি, এই ধরিয়াছি' এইরূপ ভাবিতে

---

(१) विप्रकृतं। (२) धरणीतल...। (३)...विनिर्गतः। (४) कानने। (५) शैलशिखरावतीर्णं। (६) अपूर्वतया तु। (७)...तुरङ्गः। (८) समुपससर्प। (९) बलसमूहात्। (१०) उपससार

"इदं गृहीतं इदं गृहीतं" इत्यतिरभसाकृष्टचेता महाजवतया तुरङ्गमस्य मुहूर्त्तमात्रेणैकपदमिवासहायस्तस्मात् प्रदेशात् पञ्चदशयोजनमात्रमध्वानं जगाम (भ)। तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य सम्मुखापतितमचलतुङ्गशिखरमारुरोह (म)। आरूढे च तस्मिन् शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम्, अचल-शिखर-प्रस्तर-प्रतिहत-(१) गतिप्रसरं विधृततुरङ्गः (२) चन्द्रापीडस्तस्मिन् काले समारूढ-(३) श्रम-खेदार्द्र-शरीरमिन्द्रायुधमात्मानञ्चावलोक्य (४) क्षणमिव विचार्य्य स्वयमेव विहस्याचिन्तयत् (य) 'किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किन्नरयुगलेन प्रयोजनम्। यदि (५) गृहीतमिदं ततः किम्,

भावनया अतिरभसेन महावेगेन महानन्देन वा आकृष्टं चेतो यस्य सः। एकपदमिव एकपदपरिमितस्थानमित्यर्थः। पञ्चदशभिर्योजनैः प्रमितमिति पञ्चदशयोजनमात्रं, प्रमाणे मात्रट्प्रत्ययः षष्टिक्रोशपरिमितं पन्थानमित्यर्थः। "स्याद्योजनं क्रोशचतुष्टयेन" इति लीलावती।

(म) तच्चेति। किञ्च, अनुबध्यमानं अनुस्त्रियमाणं। आलोकयत एवास्य आलोकयन्तमिमं चन्द्रापीडमनादृत्य। अनादरे षष्ठी। सम्मुखं आपतितं उपस्थितं, अचलतुङ्गशिखरं पर्वतस्योच्चशृङ्गम्।

(य) आरूढ इति। किञ्च तस्मिन् किन्नरमिथुने आरूढे सति। अचलशिखरस्य पर्वतशृङ्गस्य प्रस्तरैः प्रतिहतः प्रतिबद्धो गतिप्रसरो गमनवेगो यस्य सः, अतएव विधृततुरङ्गः। समारूढेन समुत्पन्नेन श्रमस्वेदेन परिश्रमजनितघर्म्मेण आर्द्रं क्लिन्नं शरीरं यस्य तं। आत्मानं स्वदेहम्।

(र) किमितीति। आत्मा देहः। आयासितः व्यर्थपथागमनेन परिश्रमितः। इदं किन्नरयुगलम्।

ভাবিতে অত্যন্ত আনন্দে আকৃষ্টচিত্ত হইয়া একাকী চন্দ্রাপীড়, অশ্বটা অত্যন্ত বেগগামী ছিল বলিয়া এক মুহূর্ত্তে সেই স্বর্ণপুর হইতে এক-পদ-পরিমিত স্থানের ন্যায় ষাট ক্রোশ পথ চলিয়া গেলেন। (ম) কিন্তু চন্দ্রাপীড় তাহাদের পশ্চাৎ পশ্চাৎ-ই যাইতেছিলেন এবং দেখিতেছিলেন, এই অবস্থাতেই সেই কিন্নর দুইটি সম্মুখবর্ত্তী কোন পর্ব্বতের উচ্চ শৃঙ্গে যাইয়া আরোহণ করিল। (য) তাহারা পর্ব্বতের শৃঙ্গে আরোহণ করিলে চন্দ্রাপীড় ধীরে ধীরে সে দিক্ হইতে চোখ ফিরাইলেন এবং পর্ব্বত-শৃঙ্গের প্রস্তরে গমনবেগ রুদ্ধ হইতেছিল বলিয়া ঘোড়াটা ধরিলেন, সে সময়ে পরিশ্রমবশতঃ ঘর্ম্মজল নির্গত হইয়া শরীর আর্দ্র করিয়াছিল—এই অবস্থায় আপনাকে ও ইন্দ্রায়ুধকে দেখিয়া, ক্ষণকাল মনে মনে বিতর্ক করিয়া, আপনা আপনিই হাস্য করিয়া চিন্তা করিতে লাগিলেন—(র) 'কেন আমি বালকের ন্যায় এই শরীরকে অনর্থক পরিশ্রম করাইলাম; এই কিন্নর দুইটাকে ধরিলেই বা কোন্ ফল হইত, আর না ধরায়ই বা কোন্

(१) ...अचलशिखरप्रतिहत...। (२) ...तुरङ्गमः।
(३) समुपारूढ...। (४) आलोक्य। (५) क्वचित् यदीति नास्ति।

अथ न गृहीतं ततोऽपि किम्? अहो मे मूर्खतायाः प्रकारः, अहो यत्किञ्चन-कारितायामादरः, अहो निरर्थकव्यापारेष्वभिनिवेशः, अहो बालिशचरितेष्वा-सक्तिः (र)। साधुफलं कर्म्म क्रियमाणं वृथा जातम्। अवश्यकर्त्तव्या (१) क्रिया प्रस्तुता विफलीभूता। सुहृत्कार्य्यमुपपाद्यमानं नोपपन्नम्। राजधर्म्मः प्रवर्त्तितो न निष्पन्नः। गुर्व्वर्थः प्रारब्धो न परिसमाप्तः। विजिगीषुव्यापार-(२) प्रयत्नो न सिद्धः (ल)। कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं (३) भूमिमायातः (व)। कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुख-द्वयमिति विचार्य्यमाणे सत्ययं (४) आत्मैव मे पर इव हासमुपजनयति (श)।

आश्चर्य्ये अहोशब्दाः। प्रकारो विशेषः। यत्किञ्चन निष्प्रयोजनं यत्किञ्चित् कार्य्यं करोतीति स तस्य भावस्तस्यां, आदरो महायत्नः। अभिनिवेश आग्रहः। बालिशचरितेषु मूढजनव्यवहारेषु आसक्तिरैकाग्रता।

(ल) साध्विति। साधु उत्कृष्टं फलं यस्य तत्तादृशं क्रियमाणं कर्म्म दिग्विजयरूपं, वृथा जातं, इतः प्रतिनिवृत्त्यसम्भवेन तत्फलभोगासम्भवादिति भावः। अवश्यकर्त्तव्या क्रिया दुष्टनिग्रहशिष्टानुग्रहात्मक-सुशासनरूपा, प्रस्तुता आरब्धा, विफलीभूता, इतो मे प्रतिनिवृत्त्यसम्भवात्। सुहृदां मित्रनृपतीनां कार्य्यं राज्येषु सुशासनव्यवस्थापनरूपं, उपपाद्यमानं मयैव निष्पाद्यमानं सत् न उपपन्नं न सम्पूर्णं इतो गमना-सम्भवात्। राजधर्म्मो दिग्विजयात्मकः, प्रवर्त्तित आरब्धः, न निष्पन्नः पुनः स्वदेशगमनासम्भवात्। गुर्व्वर्थः पितृकार्य्यं तत्कीर्त्तिप्रसारणं, प्रारब्धो न परिसमाप्तः, अत्रैव मे विलयेन परं पराजयघोषणासम्भवात्। विजिगीषुव्यापाराय दिग्विजयात्मकाय प्रयत्नो न सिद्धः, पुनर्गृहगमनासम्भवात्।

(व) कस्मादिति। आविष्ट इव भूतग्रस्त इव सन्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(श) कस्मादिति। किञ्च। अश्वमुखद्वयं किन्नरयुगलं। पर इव अन्य इव।

অনিষ্ট হইয়াছে? যদি ইহাদিগকে ধরিতে পারিতাম, তাহা হইলেই বা কি হইত, আর যে ধরিতে পারি নাই, তাহাতেই বা কি হইয়াছে? কি আশ্চর্য্য! আমার মূর্খতার রকম দেখ, যে কোন কার্য্য করিতে আমার যত্ন, অনর্থক কার্য্যে আমার আগ্রহ! এবং মূর্খের ব্যবহারে আমার আসক্তি। (ল) যাহার ফল উৎকৃষ্ট, সেই কার্য্য করিতেছিলাম; কিন্তু তাহা আজ বৃথা হইল; যাহা অবশ্যকর্ত্তব্য, সেই কার্য্য আরম্ভ করিয়াছিলাম, তাহা বিফল হইয়া গেল; মিত্রগণের কার্য্য করিতেছিলাম, সম্পন্ন হইল না; রাজার নিয়ম আরম্ভ করিয়াছিলাম, সম্পূর্ণ হইল না; পিতার কার্য্য আরম্ভ করিয়াছিলাম, সমাপ্ত হইল না; বিজিগীষুর কার্য্যসাধনে যত্ন করিয়াছিলাম, সিদ্ধ হইল না। (ব) কেন আমি ভূতাবিষ্টের ন্যায় নিজের পরিজনদিগকে পরিত্যাগ করিয়া এত দূরে আসিলাম। (শ) বিনা প্রয়োজনে কেন আমি এই কিন্নর দুইটার অনুসরণ করিলাম, ইহার বিচার করিতে লাগিলে আমার এই আত্মাই অন্যের ন্যায়

(१) कर्त्तव्यक्रियां। (२)...व्यापारं।
(३) उत्सृष्टा निजपरिवारं उत्सृष्टपरिवार एव तावतीं। (४) यत् सत्यं।

न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि मे (ष)। महाजवो हीन्द्रायुधो निमेष-(१) मात्रेणातिदूरमतिक्रामति (स)। न चागच्छता मया तुरगवेगवशात् किन्नरमिथुने बद्धदृष्टिना (२) अस्मिन्नविरल-तरु-शत-शाखा-गुल्म-लता-सन्तान-गहने निरन्तर निपतित-(३) शुष्क-पर्णावकीर्ण-तले महावनी पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि (ह)। न चास्मिन् प्रदेशे प्रयत्नेनापि परिभ्रमता मया (४) मर्त्त्यधर्म्मा कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति (क्ष)। श्रुतं हि मया बहुशः कथ्यमानं, 'उत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्म्मानुषमरण्यम्,

(ष) ननु वृथानिर्वेदमपहाय गत्वा स्वजनैः सह संयुज्यतामित्याह न जाने इति।

(स) अथेदानीमेवागतोऽसीति न तथातिदूरे बलमित्याह महेति। हि यस्मात्।

(ह) ननु तथापि पन्थानं पश्यन्नेवागतोऽसीति तेनैव परिचितेन पथा प्रतिगम्यतामित्याह न चेति। अविरलेन घनेन तरुशतस्य वृक्षसमूहस्य, शाखानां, गुल्मानां स्तम्बानां, लतानाञ्च सन्तानेन परम्परया गहने निविड़े, तथा निरन्तरं निरवकाशं यथा स्यात् तथा निपतितैः शुष्कपर्णैः अवकीर्णं आच्छन्नं तलं निम्नदेशो यस्य तस्मिन्। न च निरूपितः नैव सम्यग् दृष्टः। अत्र निरूपणाभावं प्रति किन्नरमिथुने बद्धदृष्टित्वं तुरगवेगः अविरलेत्यादिविशेषणद्वयार्थश्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(क्ष) अथैवमेव तत् कश्चिज्जनं पन्थानं पृष्ट्वा गच्छ इत्याह नचेति। मर्त्त्यधर्म्मा मानवः। प्रयत्नेनापि नासाद्यते न लब्धुं शक्यते। सुतरां जिज्ञासयापि निरूपणासम्भव इति भावः।

(क) ननु कथं मर्त्त्यधर्म्मा नासीदेत इत्याह श्रुतमिति। हि यस्मात्। कथ्यमानं वृद्धैरिति शेषः। सुवर्णपुरं उत्तरेण सुवर्णपुरस्यादूरे उत्तरस्यां दिशि। उत्तरेणेति "अदूरे एनोऽपञ्चम्या" इत्येनप्रत्ययः, तद्योगे सुवर्णपुरमिति "द्वितीयैनेने"ति द्वितीया। पृथिव्याः सर्वजनपदानां सीमान्तलेखा अवधिशेषरेखा।

হাস্ত অন্যায়। (ষ) জানি না—আমার অশ্বগামী সৈন্যগণ এ স্থান হইতে কত পথে বিভক্ত হইয়া রহিয়াছে। (স) কারণ—মহাবেগবান্ ইন্দ্রায়ুধ এক নিমেষেই বহুদূর অতিক্রম করিয়া থাকে। (হ) আমি আসিবার কালে অশ্বের বেগবশতঃ এবং কিন্নর দুইটার প্রতি নিশ্চল দৃষ্টি রাখায় এই মহাবনের পথ নিরূপণ করিতে পারি নাই যে, ফিরিয়া যাইব; বিশেষতঃ ঘন ঘন বৃক্ষসমূহ, শাখা, গুল্ম ও লতাসমূহে এই মহাবন অত্যন্ত নিবিড় ছিল এবং ঘনভাবে নিপতিত শুষ্কপত্রসমূহে ইহার নিম্নদেশ আচ্ছন্ন ছিল। (ক্ষ) আমি এই প্রদেশে বিচরণ করিয়া বিশেষ যত্ন করিলেও এমন কোন মানুষ পাইব না, যে স্বর্ণপুরগামী পথ বলিয়া দিবে। (ক) কারণ—আমি প্রাচীনদিগকে বহুতর বলিতে শুনিয়াছি যে, 'সুবর্ণপুরের উত্তরে পৃথিবীর সমস্ত দেশের শেষ সীমার রেখা রহিয়াছে, তাহার পর মনুষ্যহীন অরণ্য এবং

(१) निमिष···। (२) निबद्धदृष्टिना। (३)...पतित...। (४) कश्चित् सधैति नास्ति।

तस्यातिक्रम्य कैलासगिरिरिति'। अयञ्च कैलासः (क)। तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्षयोत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम् (ख)। 'आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव' इत्यवधार्य्य वामकरतल-वलित-(१) रश्मिपाशस्तुरङ्गमं व्यावर्त्तयामास। (ग)

व्यावर्त्तिततुरङ्गमश्च (२) पुनश्चिन्तितवान्—'अयमुद्भासित-प्रभा-भास्वरो भगवान् भानुरधुना दिवसश्रियो रशनामणिरिव नभस्तलमध्यं (३) अलङ्करोति (घ)। परिश्रान्तश्चायमिन्द्रायुधः, तदेनं तावदाग्रहीत-कतिपय-दूर्वा-प्रवाल-कवलं कस्मिंश्चित् सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयञ्च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्त्त-

---

कैलासगिरिर्वर्त्तत इति शेषः। इति कथ्यमानमित्यन्वयः। अयञ्च सन्निधौ दृश्यमानः स कैलासः। सुतरामत्र मानुषप्रचारोऽपि नास्तीति भावः।

(ख) तदिति। तस्मात्। स्वयमुत्प्रेक्षयोत्प्रेक्ष्य आत्मनैव सम्भाव्य सम्भाव्य, दक्षिणामाशां दिशं अङ्गीकृत्य गन्तव्यत्वेन स्वीकृत्य अवलम्ब्येत्यर्थः, केवलं गन्तव्यं। तथा च यदि स्वजनः प्राप्यत इति भावः।

(ग) आत्मेति। नियतं निश्चितं। इत्यवधार्य्य मनसा निश्चित्य। वामकरतलेन वलित आकृष्य धृतः रश्मिपाशः प्रग्रहरज्जुर्येन सः। तुरङ्गमिन्द्रायुधम्।

(घ) व्यावर्त्तितेति। उद्भासितप्रभाभिः सन्दीप्तद्युतिभिः भास्वरो विशेषेण दीप्तिमान्, भानुः सूर्य्यः, दिवसश्रियो रशनामणिरिव काञ्चीदामरत्नमिव नभस्तलस्य आकाशस्य मध्यमलङ्करोति, मध्याह्नः प्रवृत्त इत्यर्थः। अत्र जात्युत्प्रेक्षालङ्कारः।

(ङ) परीति। एनमिन्द्रायुधं, आग्रहीता मुखेन धृताः खादिता इत्यर्थः कतिपये दूर्वाप्रवालानां

---

তাহা অতিক্রম করিয়া কৈলাসপর্ব্বত অবস্থান করিতেছে'; এই সেই কৈলাসপর্ব্বত দেখা যাইতেছে। (খ) সুতরাং এখন একাকীই এখান হইতে ফিরিয়া আপনা আপনিই বিবেচনা করিয়া করিয়া দক্ষিণ দিক্ অবলম্বনপূর্ব্বক কেবলই গমন করিতে হইবে। (গ) 'নিজকৃত দোষের ফল, নিশ্চয় নিজেরই ভোগ করিতে হয়' এইরূপ মনে মনে স্থির করিয়া বামহস্তদ্বারা লাগাম টানিয়া ধরিয়া ঘোড়াটী ফিরাইলেন।

(ঘ) ঘোড়াটী ফিরাইয়া আবার চিন্তা করিতে লাগিলেন—'প্রখর কিরণসমূহে অত্যন্ত দীপ্তিমান্ এই সূর্য্যদেব, এখন দিনলক্ষ্মীর কাঞ্চীদামস্থিত মণির ন্যায় আকাশের মধ্যস্থান অলঙ্কৃত করিতেছেন। (ঙ) এই ইন্দ্রায়ুধও পরিশ্রান্ত হইয়া পড়িয়াছে, অতএব ইহাকে কয়েকটি দূর্ব্বাপল্লবের গ্রাস ভক্ষণ করাইয়া, কোন সরোবরে কিংবা পার্ব্বত্য-প্রস্রবণে অথবা নদীর জলে

---

(१)...वलित..। (२)...तुरङ्गश्च, तुरगश्च। (३) क्वचित् नभस्तलमिति नास्ति।

मात्रं विश्रम्य ततो गमिष्यामि' (ङ)। इति चिन्तयित्वा सलिलमन्विष्यन् (१) मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्य्यटन् नलिनीजलावगाहोत्थितस्याचिरादपक्रान्तस्य च महतो गिरिचरस्य वनगजयूथस्य चरणोत्थापितैः (२) पङ्कपटलैरार्द्रीकृतम्, करावकृष्टैश्च समृणालमूलनालैः (३) कमलकलापैः कल्माषितम्, आर्द्रार्द्रैश्च शैवलप्रवालैः श्यामलितोद्देशम्, उद्दलितैश्च कुमुद-(४) कुवलय-कह्लार-कुड्मलैरन्तरान्तरा विच्छुरितम्, उत्खातैश्च सकर्द्दमैः शालूककन्दैराकीर्णम्, खण्डितैश्च (५) कुसुमस्तवकशारैर्धनपल्लवैराच्छादितम्, आलूनाभिश्च कुसुमो-

---

दूर्वापल्लवानां कवला ग्रासा येन तम्। शिलाप्रस्रवणे पर्वतनिर्झरे, सरिदम्भसि नदीजले वा, आदौ स्नातं स्नानमग्नीकृतं परश्च पीतं उदकं येन तं, अतएव अपनीतः श्रमो यस्य तं तादृशं।

(च) इतीति। पर्य्यटन् चन्द्रापीडो मार्गमद्राक्षीदिति परेणान्वयः। नलिन्याः पद्मयुक्तस्य सरोवरस्य जले अवगाहात् स्नानात् परमुत्थितस्य। "नलिनी पद्मिनी पद्म-व्योमसिन्धु-सरोवरे। नलिकायाञ्च नलिनी" इति विश्वः। अपक्रान्तस्य अपसृतस्य। पङ्कपटलैः कर्द्दमसमूहैः। आर्द्रीकृतमित्यतो द्वितीयैकवचनान्तपदानि मार्गमिति वक्ष्यमाणस्य विशेषणानि। करावकृष्टैः शुण्डाभिराकृष्यानीतैः। अपि चेति चकाराणामर्थः सर्वत्र। कल्माषितं चित्रीकृतम्। आर्द्रार्द्रैरचिरोत्तोलनादतिशयेन जलक्लिन्नैः, शैवलप्रवालैः शैवालपल्लवैः श्यामलिताः श्यामवर्णीकृताः उद्देशाः स्थानानि यस्य तम्। उद्दलितैर्भङ्क्त्वोत्थापितैः, कुमुदानि श्वेतोत्पलानि, कुवलयानि नीलोत्पलानि, कह्लाराणि सौगन्धिकानि, तेषां कुड्मलैर्मुकुलैः, अन्तरान्तरा मध्ये मध्ये विच्छुरितं रञ्जितम्। उत्खातैरुत्पाटितैः शालूककन्दैरुत्पलानां मूलैः, आकीर्णं व्याप्तम्। "शालूकमेषां कन्दः स्या"दित्यमरः। अत्र शालूकशब्देनैव चरितार्थत्वे पुनर्मूलार्थककन्दशब्दोपादानादधिकपदतादोषः, कन्दपदपरित्यागेनैवासौ समाधेयः। खण्डितैर्भग्नैः कुसुमस्तवकशारैः पुष्पगुच्छविचित्रैः। आलू-

---

স্নান ও জলপান করাইয়া, ইহার পরিশ্রম দূর করিয়া আপনিও জলপান করিয়া কোন বৃক্ষের নীচের ছায়াতে কিছুকাল বিশ্রাম করিয়া তাহার পরে যাইব' (চ) এইরূপ চিন্তা করিয়া জলের অন্বেষণে ইতস্ততঃ বারংবার দৃষ্টিপাত করিয়া বিচরণ করিতে করিতে একটি পথ দেখিতে পাইলেন। পর্ব্বতচারী কতকগুলি বন্য হস্তী সরোবরের জলে অবগাহনপূর্ব্বক উঠিয়া সদ্যই চলিয়া গিয়াছে, তাহাদের চরণদ্বারা উত্থাপিত কর্দ্দমসমূহে সেই পথটি আর্দ্র করিয়াছিল; শুণ্ডদ্বারা মৃণাল, মূল ও নালদণ্ডের সহিত উত্তোলিত কতকগুলি পদ্মে, সেই পথটি বিচিত্র করিয়াছিল; জলক্লিন্ন শেওলার পল্লবে তাহার বহুস্থান শ্যামবর্ণ করিয়াছিল; উদ্ধৃত শ্বেতোৎপল, নীলোৎপল ও সুঁধির কলিকাতে মধ্যে মধ্যে সে পথটি রঞ্জিত করিয়াছিল; কর্দ্দমের সহিত উত্তোলিত শালূকে ব্যাপ্ত ছিল; ভগ্ন ও পুষ্পগুচ্ছে বিচিত্র এইরূপ বনপল্লবে আচ্ছাদিত ছিল; ছিন্ন

---

(१) अन्विष्यमाणः, अन्वेषमाणः, अन्वेषयन्। (२) अपक्रान्तस्य, अतिमहतः, गिरिचरस्य चरणोत्तारितैः।
(३) करिकलभकृष्टैः सनालनालैः। (४) कमलकुमुद...। (५) आखण्डितैश्च।

प्रविष्टोल्लसत्-(१) षट्पदाभिर्वनलताभिराकुलितम्, अभिनवकुसुम-(२) परिमलवाहिना च तमालपल्लवरस-(३) श्यामेन मदजलेन सर्वतः सिक्तं मार्गमद्राक्षीत्। (च)

उपजातजलाशयशङ्कश्च (४) तं प्रतीपमनुसरन्, उद्ग्रीवदृश्यैरुपरिच्छत्रमण्डलाकारैः सरल-साल-सल्लकी-प्रायैरविरलैरपि निःशाखतया विरलैरिवोपलक्ष्यमाणैः पादपैरुपेतेन, (छ) स्थूल-कपिल-बालुकेन, (ज) शिलाबहुलतया (५)

---

नाभिश्छन्नाभिः, कुसुमेषु उपविष्टाः सन्तः उल्लसन्तः स्फुरन्तः षट्पदा भ्रमरा यासु ताभिः। आकुलितं व्याप्तम्। तथा अभिनवकुसुमस्य सद्यःप्रस्फुटितपुष्पस्य परिमलं सौरभं तद्वत् सुगन्धमित्यर्थः वहतीति तेन। अतएवात्र असम्बन्धे सम्बन्धरूपा निदर्शनालङ्कारः। तमालपल्लवस्य रसवत् निर्यासवत् श्यामेन। अत्र लुप्तोपमालङ्कारः।

(छ) उपेति। उपजाता जलजादिचिह्नदर्शनादुत्पन्ना जलाशयस्य शङ्का सम्भावना यस्य सः, चन्द्रापीडः, तं मार्गं प्रतीपं प्रतिकूलं यथा स्यात्तथा अनुसरन् तदाभिमुख्येन गच्छन् कैलासतलेन कञ्चिदध्वानं गत्वा तरुषण्डं ददर्शेत्यन्वयः। उद्ग्रीवं यथा स्यात्तथैव दृश्यैरत्युच्चैरित्यर्थः, उपरि भागे छत्रमण्डलस्य आतपत्रावरणवलयस्य आकार इव आकारो येषां तैः। अत्र लुप्तोपमालङ्कारः। सरलसालसल्लक्यः स्वनामख्यातपार्वत्यवृक्षविशेषाः प्रायाः बहुला येषु तैः, अविरलैर्घनैरपि निःशाखतया शिखरपर्य्यन्तशाखाहीनतया हेतुना, विरलैरघनैरिव उपलक्ष्यमाणैर्दृश्यमानैः। अत्र गुणोत्प्रेक्षालङ्कारः। पादपैरुपेतेन—इत्यतः क्लीवलिङ्गानि तृतीयैकवचनान्तपदानि कैलासतलेनेति वक्ष्यमाणस्य विशेषणानि।

(ज) स्थूलेति। स्थूलाः पीवराः कपिलाः पिङ्गलवर्णाश्च बालुकाः सिकता यस्मिन् तेन।

(झ) शिलेति। शिलाबहुलतया हेतुना, विरला अल्पाः, तृणानि, उलपा विस्तीर्णा लताश्च यस्मिन् तेन। "लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि" इत्यमरः।

---

বন লতাতে ব্যাপ্ত ছিল, ভ্রমরগণ সেই লতার ফুলের উপর বসিয়া শোভা পাইতেছিল এবং নূতন পুষ্পের ন্যায় সৌরভবাহী ও তমালপল্লবের নির্যাসের ন্যায় শ্যামবর্ণ হস্তিগণের মদজলে সেই পথটির সকল স্থান সিক্ত ছিল।

(ছ) সেই পথ দেখিয়া, নিকটে জলাশয় আছে বলিয়া চন্দ্রাপীড়ের ধারণা জন্মিল; তখন তিনি সেই পথের অভিমুখে কৈলাসপর্ব্বতের নীচ দিয়া যাইতে লাগিলেন; সেই স্থানে বহুতর বৃক্ষ ছিল, সেগুলিকে উদ্গ্রীব হইয়া দেখিতে হইত; সেগুলির উপরিভাগ, ছত্রের ন্যায় মণ্ডলাকার পত্র ও পল্লবে আচ্ছন্ন ছিল; তাহার মধ্যে সরল, সাল ও সল্লকীবৃক্ষই অধিক পরিমাণে ছিল, এবং ঘন হইলেও শাখা না থাকায় ফাঁক ফাঁক হইয়া রহিয়াছে বলিয়া বোধ হইতেছিল। (জ) সে স্থানে পিঙ্গলবর্ণ বড় বড় বালি ছিল; (ঝ) প্রস্তরময় বলিয়া

---

(१) कुसुमोपविष्टनिष्पिष्टोल्लसत...। (२)...बकुलकुसुम...। (३)...सरस...।
(४)...जलाशय। (५) शिलातलबहुलतया।

विरलतृणोलपेन, (झ) वन-द्विप-दशन-दलित-मनःशिला-धूलि-कपिलेन, (ञ) आभङ्गिनीभिरुत्कीर्णाभिरिव पत्रभङ्गकुटिलाभिः पाषाणभेदक-मञ्जरीभिर्जटिलीकृतशिलातलेन, (ट) अनवरत-गलद्गुग्गुलु-द्रुम-द्रवार्द्रीकृत-दृषदा, (ठ) शिखर-स्रुत-शिला-जतु-रस-पिच्छिलोपलेन, (ड) टङ्कन-हय-खुर-खण्डित-हरिताल-क्षोद-पांशुलेन, (ढ) आखु-नखरोत्खात-बिल-विप्रकीर्ण-(१) काञ्चन-चूर्णेन, (ण) सिकता-निमग्न-चमर-(२) कस्तूरिका-मृगी-खुर-

---

(ञ) वनेति। वनद्वीपानां वन्यहस्तिनां दशनैर्दन्तैर्दलितानां मर्द्दितानां मनःशिलानां पार्वत्यधातु-विशेषाणां धूलिभिः रेणुभिः कपिलेन पिङ्गलवर्णेन।

(ट) आभङ्गीति। आभङ्गी विविधभङ्गिरासामस्तीति ताभिः, अतएव उत्कीर्णाभिरिव पाषाणं सन्तक्ष्य निर्म्मिताभिरिव स्थिताभिः, पत्रभङ्गवत् कपोलादौ पत्रलताचिह्नवत् कुटिलाभिर्वक्राभिः, पाषाण-भेदकानां वृक्षविशेषाणां मञ्जरीभिः जटिलीकृतानि विषमितानि शिलातलानि पाषाणयोरन्तराणि यस्य तेन। अत्र क्रियोत्प्रेक्षालुप्तोपमयोर्मिथो निरपेक्षतया संसृष्टिः। "पाषाणभेदनः (पुं) वृक्षविशेषः" इति कल्पद्रुमः।

(ठ) अनेति। अनवरतं गलद्भिः गुग्गुलुद्रुमाणां द्रवैर्निर्य्यासैः आर्द्रीकृता दृषदः पाषाणा यस्मिन् तेन।

(ड) शिखरेति। शिखरात् शृङ्गात् स्रुतेन गलितेन शिलाजतुरसेन तदाख्यधातुद्रवेण पिच्छिला उपलाः प्रस्तरा यस्मिन् तेन।

(ढ) टङ्कनेति। टङ्कनानि पाषाणविदारणास्त्राणीव ये हयानामश्वानां खुरास्तैः खण्डितानां चूर्णितानां हरितालानां क्षोदैश्चूर्णैः पांशुलं धूलिमयं तेन। "टङ्कः पाषाणदारणः" इत्यमरः।

(ण) आखिति। आखूनां उन्दुरूणां नखरैर्नखैः उत्खातेभ्यः कृतेभ्यो बिलेभ्यो गर्त्तेभ्यः विप्र-कीर्णानि विक्षिप्तानि काञ्चनचूर्णानि सुवर्णरेणवो यस्मिन् तेन।

(त) सिकतेति। सिकतासु वालुकासु निमग्ना अवगाढा चमराणां हरिणविशेषाणां कस्तूरिका-मृगीणाञ्च खुरपङ्क्तिः खुरचिह्नश्रेणिर्यस्मिन् तेन।

---

তৃণ ও লতা অল্পই ছিল। (ঞ) বন্য হস্তিগণের দন্তদ্বারা চূর্ণিত মনঃশিলার রেণুতে সে স্থানটি পিঙ্গলবর্ণ হইয়াছিল। (ট) হাড়জোড়া গাছের মঞ্জরীতে দুই দুইখানা পাথরের মধ্যস্থান দুর্গম করিয়াছিল; সেগুলি, কপোল-চিত্রিত পত্রলতাচিহ্নের ন্যায় বক্র ছিল এবং নানাবিধ ভঙ্গী থাকায় সেগুলিকে পাষাণ হইতে খোদিতের ন্যায় দেখা যাইতেছিল; (ঠ) গুগ্গুলু-বৃক্ষ হইতে অনবরত নির্য্যাস গলিত হইয়া পাথরগুলিকে আর্দ্র করিয়াছিল; (ড) শৃঙ্গ হইতে গলিত শিলাজতুর রসে পাথরগুলি পিছল হইয়াছিল; (ঢ) সাবলের ন্যায় ঘোড়ার খুরদ্বারা বিদীর্ণ হরিতালের রেণুতে সে স্থানটা লিমগ্ন হইয়াছিল; (ণ) মূষিকের নখ-নির্ম্মিত গর্ত্ত হইতে সুবর্ণরেণু সকল বিক্ষিপ্ত থাকিত; (ত) চমরমৃগ ও কস্তূরীমৃগের খুরের চিহ্ন

---

(१)...अवकीर्ण...। (२)...चमरक...।

पङ्क्तिना, (त) संशीर्ण-रङ्कु (१) रल्लक-रोम-प्रकर-निचितेन, (थ) विषम-शिलाच्छेदोपविष्ट-जीवञ्जीवक-युगलेन, (द) वनमानुषमिथुनाध्यासिततट-गुहामुखेन, (ध) गन्धपाषाण-परिमलामोदिना, वेत्रलताप्रतानप्ररूढवेणुना (२) कैलासतलेन, (न) कञ्चिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागे जलभारालसं (३) जलधर-व्यूहमिव बहुल-पक्ष-क्षपान्धकारमिव (४) पुञ्जीकृतमत्यायतं तरुषण्डं (५) ददर्श (प)। तत्र (६) सम्मुखादागतेन (७)

(त) संशीर्णेति। संशीर्णेन देहात् पतितेन रङ्कूणां रल्लकानाञ्च हरिणविशेषाणां रोमप्रकरेण लोमसमूहेन निचितं व्याप्तं तेन।

(थ) विषमेति। विषमेषु उच्चावचेषु शिलाच्छेदेषु प्रस्तरखण्डेषु उपविष्टानि जीवञ्जीवकयुगलानि चकोरपक्षिमिथुनानि यस्मिन् तेन। जीवं प्राणिनं जीवयति विषनाशनेनेति जीवञ्जीवकः। "जीवञ्जीवश्चकोरे स्याद् द्रुमभेदेऽपि पुंस्ययम्।" इति मेदिनी।

(द) वनेति। वनमानुषाणां मिथुनैर्दम्पतीभिः अध्यासितानि तटगुहामुखानि पार्वत्यगह्वरद्वाराणि यत्र तेन।

(ध) गन्धेति। गन्धपाषाणानां गन्धकानां परिमलेन सौरभेण आमोदिना आह्लादकारिणा। "गन्धपाषाणः (पुं) गन्धकः।" इति शब्दकल्पद्रुमः। वेत्रलतानां प्रतानेषु गुच्छेषु प्ररूढा उत्पन्ना वेणवो वंशा यस्मिन् तेन। कैलासतलेन कैलासपर्वतस्य निम्नदेशेन।

(न) कञ्चिदिति। कञ्चिदध्वानं कियन्तं पन्थानं। जलधरव्यूहं मेघसमूहमिव, तथा बहुलपक्षस्य कृष्णपक्षस्य क्षपाया रात्रेरन्धकारमिव, निबिडतया गाढकृष्णवर्णमिति भावः। अत्यायतं बहुस्थानव्यापि, तरुषण्डं वृक्षसमूहं। अत्र श्रौतोपमाद्वयस्य परस्परनिरपेक्षतया संसृष्टिः।

(प) तत्रेति। कुसुमरजसां पुष्पपरागाणां कषायैः सौरभैः आमोदिना आह्लादकारिणा, "कषायः

সকল বালুকারাশির উপরে পড়িয়াছিল; (থ) রঙ্কুমৃগ ও কম্বলমৃগের গাত্র হইতে লোমসমূহ পতিত হইয়া সে স্থানটা ব্যাপ্ত করিয়াছিল; (দ) উচু নীচু পাথরখণ্ডের উপরে বহুতর চকোরপক্ষী বসিয়াছিল; (ধ) পর্ব্বতগহ্বরের দ্বারে বহুসংখ্যক বনমানুষদম্পতী অবস্থান করিতেছিল; (ন) গন্ধকের গন্ধে আমোদ জন্মাইতেছিল এবং বেতের ঝাড়ের ভিতরে বাঁশের ঝাড় জন্মিয়াছিল; (প) চন্দ্রাপীড় সেই কৈলাসপর্ব্বতের নীচ দিয়া কিছু পথ অতিক্রম করিয়া সেই কৈলাসপর্ব্বতেরই পূর্ব্বোত্তর কোণে, জলভারে মন্থর মেঘসমূহের ন্যায় এবং কৃষ্ণ পক্ষের রাত্রির অন্ধকারের ন্যায় কৃষ্ণবর্ণ, বহুস্থানব্যাপী ও পুঞ্জীকৃত বৃক্ষসমূহ দেখিতে পাইলেন। (ফ) পুষ্পরেণুর সৌরভে আহ্লাদজনক, জলসংস্পর্শে শীতল,

(१) संशीर्णजीर्णरङ्कु, सङ्कीर्णशङ्कु, सङ्कीर्णजीर्णरल्लक…। (२)…प्रतानवताप्ररूढ…। (३) जलभारालसजल…। (४) बहुलक्षपा… (५) विविधतरुषण्डं। (६) तत्र। (७) सम्मुखागतेन।

कुसुम-(१) रजः-कषायामोदिना जलसंसर्गशिशिरेण शीकरिणा (२) चन्दन-रस-स्पर्शेन (३) आलिङ्ग्यमान इव जलतरङ्गमारुतेन, कमलमधुपानमत्तानाञ्च श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश (४)। (फ)

प्रविश्य च तस्य तरुषण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, (५) निर्गमन-(६) मार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलाकारं (७) गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्, त्रिभुवन-पुण्यराशिमिव सरोरूपेणावस्थितम्,

सुरभौ रसे" इति त्रिकाण्डशेषः, जलसंसर्गेण शिशिरः शीतलस्तेन, शीकरिणा जलविन्दुवता, तथा चन्दन-रसस्य स्पर्श इव स्पर्शो यस्य तेन, जलतरङ्गमारुतेन आलिङ्ग्यमान इव। अत्र क्रियोत्प्रेक्षालङ्कारः। तरङ्ग-शब्देन जलार्थस्यापि बोधनात् तद्वाचकमपि जलपदमिति नाधिकपदत्वदोषः। कमलमधुपानमत्तानां कलहंसानां श्रोत्रहारिभिर्मधुरतया कर्णाकर्षकैः कोलाहलैराहूयमान इव च सन् तत् तरुषण्डं प्रविवेश च इत्यन्वयः। अत्रापि क्रियोत्प्रेक्षालङ्कारः।

(ब) प्रविश्येति। किञ्च प्रविश्य तस्य तरुषण्डस्य मध्यभागे अच्छोदं नाम सरो ददर्शेति दूरवर्त्तिन्या क्रिययान्वयः। अत्र द्वितीयान्तपदानि अच्छोदं नाम सर इत्यस्य विशेषणानि। त्रैलोक्यलक्ष्म्याः मणिदर्पणमिव स्वच्छतया सर्वप्रतिबिम्बग्रहणात्। अत्र जात्युत्प्रेक्षालङ्कारः। वसुन्धरादेव्याः स्फटिकभूमि-गृहमिव भूगर्भगतं स्फटिकमयं भवनमिव विशदत्वात्। जात्युत्प्रेक्षा। सागराणां निर्गमनमार्गमिव पाताललङ्घने निःसरणपथमिव विस्तृतत्वादतलस्पर्शत्वाच्च। जात्युत्प्रेक्षा। दिशां निस्यन्दमिव द्रवीभूय गलनमिव निर्मलत्वात्। क्रियोत्प्रेक्षा। गगनतलस्य जलाकारं अवतारमिव निर्मलत्वादेव। क्रियोत्प्रेक्षा। द्रवतामापन्नं कैलासं पर्वतमिव शुभ्रत्वात्। द्रव्योत्प्रेक्षा। विलीनं द्रवीभूतं तुषारगिरिं हिमाचलमिव शीतलत्वात्; द्रव्योत्प्रेक्षा। रसतामुपेतं जलतां प्राप्तं चन्द्रस्य आतपं प्रभामिव निर्मलशीतलशुभ्रत्वात्।

জলবিন্দুবাহী এবং চন্দনরসের ন্যায় শীতলস্পর্শী সম্মুখ হইতে আগত জলতরঙ্গের বায়ু তাঁহাকে যেন আলিঙ্গন করিতে লাগিল এবং পদ্মের মধুপানে মত্ত কলহংসগণের সুমধুর কোলাহল তাঁহাকে যেন আহ্বান করিতে লাগিল—এই অবস্থায় চন্দ্রাপীড় সেই বৃক্ষসমূহমধ্যে প্রবেশ করিলেন।

(ব) চন্দ্রাপীড় প্রবেশ করিয়া সেই বৃক্ষসমূহের মধ্যস্থানে 'অচ্ছোদ' নামে একটি সরোবর দেখিতে পাইলেন। ত্রিলোকলক্ষ্মীর মণিময় দর্পণের ন্যায়, পৃথিবীদেবীর ভূতলান্তর্গত স্ফটিকময় গৃহের ন্যায়, পাতাল হইতে সমুদ্রগণের ভূতলে নির্গত হইবার পথের ন্যায়,

(१) कुसुद...। (२) शिशिरशीकरिणा। (३)...रससमस्पर्शेन। (४) विवेश।
(५) वसुधादेव्याः। (६) जलनिर्गमन...।
(७) अंशावतारमिव गगनतलस्य, अवतारमिव जलाकारं, अंशावतारं जलाकारं...।

वैदूर्य्यगिरिजालमिव सलिलाकारेण परिणतं शरदभ्रवृन्दमिव द्रवीभूयैकत्र निस्यन्दितम्, आदर्शभवनमिव (१) प्रचेतसः, (ब) स्वच्छतया मुनिमनोवृत्तिभिरिव सज्जनगुणैरिव हरिणलोचनप्रभाभिरिव मुक्ताफलांशुभिरिव निर्म्मितम्, (भ) आपूर्णं पर्य्यन्तमप्यन्तः-स्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्, (म) अनिलोद्धूत-जलतरङ्ग-शीकर-धूलि-जन्मभिः सर्वतः संस्थितैः (२)

---

जात्युत्प्रेक्षा। जलीभूतं हरस्य शिवस्य अट्टहासं विशालहास्यमिव शुभ्रत्वात्। क्रियोत्प्रेक्षा। विशेषशुभ्रताद्योतनाय हरपदम्। सरोरूपेणावस्थितं त्रिभुवनस्य पुण्यराशिमिव पवित्रत्वात्। जात्युत्प्रेक्षा। सलिलाकारेण परिणतं, विदूरे भवानीति वैदूर्य्याणि रत्नानि तेषां गिरिजालं पर्व्वतसमूहमिव निर्म्मलत्वात्। जात्युत्प्रेक्षा। नूतनमेघशब्दाद्विदूरभूमौ कानिचित् रत्नान्युत्पद्यन्ते तानि वैदूर्य्याण्युच्यन्ते। यथा कुमारसम्भवे कालिदासोऽपि—"विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव।" "वैदूर्य्यं बालवायज"मिति विश्वः। तथा द्रवीभूय एकत्र निस्यन्दितं शरदभ्रवृन्दं शरत्कालीयमेघसमूहमिव विशदत्वात्। जात्युत्प्रेक्षा। शरत्काल एव मेघानां वैशद्यं स्यादित्यतः शरत्पदम्। प्रचेतसो वरुणस्य आदर्शभवनमिव दर्पणमयगृहमिव प्रतिबिम्बपतनात्। जात्युत्प्रेक्षालङ्कारः।

(भ) स्वच्छेति। स्वच्छतया हेतुना, मुनिमनोवृत्तिभिर्निर्म्मितमिव तासामपि स्वच्छत्वादिति भावः। एवं सर्व्वत्रान्वयः। अत्र चतसृणामिव क्रियोत्प्रेक्षाणां मिथो निरपेक्षतया संसृष्टिः।

(म) आपूर्णेति। आपूर्णो जलैः सम्पूर्णः पर्य्यन्त उपरिशेषसीमा यस्य तत्तादृशं सदपि, अन्तरभ्यन्तरे स्पष्टं यथा स्यात्तथा दृष्टाः सकलवृत्तान्ताः प्रतिबिम्बभाविन तरुलतास्पन्दनादिव्यापाराः, अथवा मीनस्फटिकबालुकादिपदार्था यस्मिन् तत्तथोक्तं तस्य भावस्तया हेतुना, रिक्तं जलरहितमिव उपलक्ष्यमाणं दृश्यमानम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(य) अनिलेति। अनिलोद्धूतानां वायूत्पादितानां जलतरङ्गाणां शीकरधूलिभ्यो बिन्दुकणेभ्यो जन्म येषां तैः, सर्व्वतः संस्थितैः समन्ताद्विद्यमानैः इन्द्रचापसहस्रैः इन्द्रधनुःसमूहैः रच्यमानमिव। अत्रापि

---

দিক্‌সমূহের জল হইয়া ক্ষরিত হওয়ার ন্যায়, আকাশের জলাকারে অবতারগ্রহণের ন্যায়, তরলতাপ্রাপ্ত কৈলাসপর্ব্বতের ন্যায়, দ্রবীভূত হিমালয়ের ন্যায়, জলতাপ্রাপ্ত চন্দ্ররশ্মির ন্যায়, শিবের জলীভূত অট্টহাস্যের ন্যায়, সরোবররূপে অবস্থিত ত্রিজগতের পুণ্যপুঞ্জের ন্যায়, জলাকারে পরিণত বৈদূর্য্যমণির পর্ব্বতসমূহের ন্যায়, দ্রবীভূত হইয়া একস্থানে পতিত শরৎকালীয় মেঘসমূহের ন্যায় এবং বরুণের দর্পণময় গৃহের ন্যায় সেই অচ্ছোদসরোবরকে দেখা যাইতেছিল। (ভ) নিতান্তনির্ম্মল বলিয়া সেই সরোবরটি যেন, মুনিগণের মনোবৃত্তি, সজ্জনের গুণগ্রাম, হরিণগণের নয়নকান্তি, কিংবা মুক্তার কিরণসমূহদ্বারা নির্ম্মিত হইয়াছিল। (ম) সরোবরটি জলে পরিপূর্ণ থাকিলেও ভিতরের সকল বস্তু স্পষ্ট দেখিতে পাওয়ায় জলশূন্য বলিয়া বোধ হইতেছিল। (য) বায়ুকর্ত্তৃক উত্থাপিত তরঙ্গের জলবিন্দুসমূহে

---

(१) आदर्शमिव, आदर्शभुवनमिव। (२) समुपस्थितैः समुत्थितैः।

रच्यमानमिवेन्द्रचापसहस्रैः, (य) प्रतिमानिभेनान्तःप्रविष्टं (१) सकानन-(२) शैलनक्षत्रग्रहचक्रवालं त्रिभुवनमुद्भिन्नपङ्कजेनोदरेण नारायणमिव बिभ्राणम्, (र) आसन्नकैलासावतीर्णस्य च शतशो भगवतः खण्डपरशोर्मज्जनोन्मज्जन-क्षोभ-चलित-चूडामणि-चन्द्रखण्डच्युतेनामृतरसेन जल-क्षालित-वामार्द्ध-कपोल-गलित-लावण्य-प्रवाहानुकारिणा सम्मिश्रितजलम्, (३) (ल) उपकूल-तमाल-वन-

---

क्रियोत्प्रेक्षालङ्कारः। उद्गतेषु जलबिन्दुषु रविकिरणपातेन तेषामिन्द्रचापवन्नानावर्णतया दृश्यमानत्वादियमुत्प्रेक्षेति बोध्यम्।

(र) प्रतिमेति। नारायणमिव, उद्भिन्नानि विकसितानि पङ्कजानि यस्मिन् तेन तादृशेन उदरेण अभ्यन्तरभागेन, नारायणपक्षे तु उद्भि सुतपन्नं पङ्कजं ब्रह्मकमलं यस्मात्तेन, तादृशेन उदरेण कुक्षिणा करणेन, प्रतिमानिभेन प्रतिबिम्बच्छलेन अन्तःप्रविष्टं अभ्यन्तरगतं, काननानां वनानां शैलानां पर्वतानां नक्षत्राणां ताराणां ग्रहाणां रव्यादीनाञ्च चक्रवालेन मण्डलेन सहेति सकाननशैलनक्षत्रग्रहचक्रवालं त्रिभुवनं बिभ्रतं बिभ्राणं धारयदिव, नारायणपक्षे तु धारयन्तम्। सोऽपीदृशं त्रिभुवनं धारयति। तथा च शिशुपालवधेऽपि—"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।" अत्र श्रौतोपमा सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(ल) आसन्नेति। किञ्च, जलेन क्षालितस्य धौतस्य वामार्द्धस्य पार्वतीरूपदेहवामभागस्य कपोलाद्गण्डात् गलितं लावण्यप्रवाहं अनुकरोतीति तेन। अमृतरसेनेत्यस्य विशेषणमेतत्। आसन्नात् कैलासादवतीर्णस्य भगवतः खण्डपरशोः शिवस्य शतशोमज्जनोन्मज्जनाभ्यां यः क्षोभ उद्वेलनं तेन चलितात् चूडामणिस्तत्स्वरूपात् चन्द्रखण्डात् च्युतेन गलितेन अमृतरसेन सुधाद्रवेण, सम्मिश्रितानि जलानि यस्य तत्। अत्र तादृशामृतरसेन तज्जलानां मिश्रणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। रिपून् खण्डयति छिनत्तीति खण्डः, खण्डः परशुर्यस्य स खण्डपरशुः। तथा च महावीरचरिते—"येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते।"

---

সূর্য্যের কিরণ পতিত হওয়ায়, সকল দিকে বিদ্যমান ইন্দ্রধনুসমূহে যেন সেই সরোবরটিকে রক্ষা করিতেছিল। (র) সেই সরোবরের ভিতরে বহুতর পদ্ম ফুটিয়াছিল এবং বন, পর্ব্বত, নক্ষত্র ও গ্রহগণের সহিত সমস্ত ত্রিভুবন প্রতিবিম্বচ্ছলে তাহার ভিতরে প্রবেশ করিয়াছিল, সুতরাং নারায়ণ যেমন উৎপন্ন-পদ্ম-সমন্বিত উদরদ্বারা বন, পর্ব্বত, নক্ষত্র ও গ্রহগণের সহিত সমস্ত ত্রিভুবন ধারণ করেন, তেমন অচ্ছোদ সরোবরও যেন সেইরূপ ত্রিভুবন ধারণ করিতেছিল। (ল) ভগবান্ মহাদেব, নিকটবর্ত্তী কৈলাসপর্ব্বত হইতে নামিয়া সেই অচ্ছোদ সরোবরে বারংবার নিমজ্জন ও উন্মজ্জন করিতেন (ডুব দিতেন), তাহার বেগে বিচলিত মস্তকস্থিত চন্দ্রখণ্ড হইতে অমৃত নির্গত হইত; সেই অমৃত আবার জলপ্রক্ষালিত বামাঙ্গিনী গৌরীর গণ্ড-

---

(१)...प्रविष्टं...। (२)...सजलचरकानन..., सकलकानन...। (३) लावण्यानुकारिणा, मिश्रितजलं।

प्रतिविम्बान्धकारिताभ्यन्तरैर्दृश्यमान-रसातल-द्वारैरिव सलिलप्रदेशैर्गम्भीरतरम्, (१) (व) दिवाप्युपजातनिशाशङ्कैश्चक्रवाकमिथुनैः परिह्रियमाण-नीलोत्पल-वन-गहनम्, (श) असकृत्-पितामह-परिपूरित-कमण्डलु-परिपूतजलम्, (ष) अनेकशो वालखिल्य-कदम्बक-कृत-सन्ध्योपासनम्, (स) बहुशः-सलिलावतीर्ण-सावित्री-भग्न-देवतार्चन-कमलम्, (२) (ह) सहस्रशः सप्तर्षिमण्डलस्नान-

---

(व) उपेति। उपकूलं कूलसमीपस्थ तमालवनानां प्रतिविम्बैः अन्धकारितानि सञ्जातान्धकाराणि अभ्यन्तराणि येषां तैः, अतएव दृश्यमानं रसातलस्य द्वारं येषु तैरिव स्थितैः, सलिलप्रदेशैर्जलस्थलैः गम्भीरतरं अतीवगभीरम्। अत्र पदार्थहेतुकं काव्यलिङ्गं, रसातलद्वारदर्शनोत्प्रेक्षयान् क्रियोत्प्रेक्षा चानयो-रङ्गाङ्गिभावेन सङ्करः।

(श) दिवापीति। दिवापि दिनेऽपि उपजातनिशाशङ्कै रजनीभ्रमवद्भिः, तमालवनप्रतिविम्बान्धकारिताभ्यन्तरत्वादिति भावः, चक्रवाकानां मिथुनैर्युगलैः परिह्रियमाणं परित्यज्यमानं नीलोत्पलवनमेव गहनं निविडप्रदेशो यत्र तत्। अत्र दिवसे रात्रिभ्रमादभ्रान्तिमान्, नीलोत्पलवनपरित्यागासम्बन्धेऽपि तत्सम्बन्धो-क्तेरतिशयोक्तिः, तथा वनगहनशब्दयोः पर्य्यायतया आपाततः पुनरुक्तताप्रतीतेः परञ्च गहनशब्दस्य निविडार्थे पर्य्यवसानात् पुनरुक्तवदाभासश्च त्वे तेषामङ्गाङ्गिभावेन सङ्करः।

(ष) असकृदिति। असकृदनेकवारं पितामहेन ब्रह्मणा परिपूरितो यः कमण्डलुस्तेन परिपूतानि जलानि यस्य तत्। तत् कमण्डलोस्तीर्थरूपत्वेन पवित्रस्पर्शत्वादिति भावः।

(स) अनेकश इति। वाल एकः कुन्तल एव खिलः प्रतिरोधको येषां ते वालखिल्याः अङ्गुष्ठपर्व-परिमितदेहाः षष्टिसहस्रऋषिविशेषाः, तेषां कदम्बकेन समूहेन कृता सन्ध्योपासना यत्र तत्। तथा च महाभारतम्—"अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरवर्ष्मणः। पलाशवृतिकामेकां सहितान् वहतः पथि।"

(ह) बहुश इति। सलिले अवतीर्णया सावित्र्या ब्रह्मपत्न्या भग्नानि देवतार्चनस्य कमलानि यस्मिन् तत्।

(क्ष) सहेति। सहस्रशः सप्तर्षिमण्डलस्य स्नानेन अवगाहनेन पवित्रीकृतम्।

---

নিঃসৃত লাবণ্যপ্রবাহের অনুকরণ করিত, সেই অমৃত অচ্ছোদসরোবরের জলের সহিত মিশ্রিত ছিল। (ব) তীরের নিকটবর্তী তমালবনের প্রতিবিম্ব, গভীর জলের ভিতরে পড়িয়া তাহা অন্ধকার করিয়াছিল, তাহাতে বোধ হইতেছিল যেন, পাতালের দ্বার দেখা যাইতেছে। (শ) সেইরূপ অন্ধকার হওয়ায় দিনের বেলায়ও চক্রবাকদম্পতীগণের রাত্রির ভ্রম জন্মিয়াছিল, সুতরাং তাহারা নিবিড় নীলোৎপলবন পরিত্যাগ করিতেছিল। (ষ) ব্রহ্মা বারংবার কমণ্ডলু পরিপূর্ণ করিয়া তাহার জল পবিত্র করিয়াছিলেন। (স) বালখিল্য মুনিগণ অনেকবার সেই জলে সন্ধ্যা করিয়াছিলেন। (হ) সাবিত্রীদেবী জলে নামিয়া দেবতাপূজার জন্য বহুবার পদ্ম ভাঙ্গিয়া নিয়াছিলেন। (ক্ষ) সপ্তর্ষিগণ অনেক বার অবগাহন

---

(१) गभीरतरं। (२)...कमलसहस्रं।

पवित्रीकृतम्, (च) सर्वदा सिद्ध-वधू-धौत-कल्पलता-वल्कल-पुण्यीकृतोदकम्, (१) (क) उदकक्रीड़ा-दोहदागतानाञ्च गुह्यकेश्वरान्तःपुरकामिनीनां मकरकेतु-चाप-चक्राकृतिभिरतिविकटैरावर्त्तिभिर्नाभिमण्डलैरापीतसलिलम्, (ख) क्वचिद्वरुण-हंसोपात्तकमलवनमकरन्दम्, (२) (ग) क्वचिद्दिग्गज-मज्जन-जर्जरित-जरन्मृणालदण्डम्, (३) (घ) क्वचित्त्र्यम्बक-वृषभ-विषाण-कोटि-(४) खण्डित-तट-शिलाखण्डम्, (ङ) क्वचिद् यम-महिष-शृङ्ग-शिखर-विक्षिप्त-फेन-पिण्डम्, (च)

---

(क) सर्वदेति। सिद्धानां देवयोनिविशेषाणां वधूभिः धौतैः कल्पलतावल्कलैः पुण्यीकृतानि पवित्रीकृतानि उदकानि जलानि यस्य तत्।

(ख) उदकेति। किञ्च उदकक्रीड़ादोहदेन जलकेलीच्छया आगतानां गुह्यकेश्वरस्य कुवेरस्य अन्तःपुरकामिनीनां मकरकेतोर्मदनस्य चापचक्रस्य मण्डलीकृतधनुषः आकृतिरिव आकृतिर्येषां तैः, अतिविकटैर्नितान्तगभीरैः आवर्त्तो वर्त्तुलाकार एषामस्तीति तैः, नाभिमण्डलैः आपीतानि अभ्यन्तरगतीकृतानि सलिलानि यस्य तत्। अत्र आर्थोपमालङ्कारः। मकरकेतुपदेन नाभीनां कामोद्दीपकत्वसूचनान्नाविशेषे विशेषाख्यदोषः।

(ग) क्वचिदिति। वरुणस्य हंसैस्तद्वाहनैर्हंसैः उपात्ता गृहीताः कमलवनस्य मकरन्दा मधूनि यस्मिन् तत्।

(घ) क्वचिदिति। दिग्गजानां मज्जनेन अवगाहनेन जर्जरिताश्छिन्नभिन्नाः जरन्तः परिपाकात् स्वयं जीर्णाः मृणालदण्डा यस्मिन् तत्।

(ङ) क्वचिदिति। त्र्यम्बकवृषभस्य शिववृषस्य विषाणकोटिभ्यां शृङ्गाग्राभ्यां खण्डिता भग्नास्तटशिलाखण्डा यस्य तत्।

(च) क्वचिदिति। यममहिषस्य शृङ्गयोः शिखराभ्याम् अग्रदेशाभ्यां विक्षिप्ता अवगाहनकाले विकीर्णाः फेनपिण्डा यस्मिन् तत्।

---

করিয়া তাহার জল পবিত্র করিয়াছিলেন। (ক) সিদ্ধগণের স্ত্রীগণও সর্ব্বদা কল্পলতার বল্কল প্রক্ষালন করিয়া সেই জল পবিত্র করিয়াছিলেন। (খ) কুবেরের অন্তঃপুরবাসিনী রমণীগণ জলকেলি করিবার অভিলাষে সেই সরোবরে আসিতেন, অতিগভীর এবং কামদেবের মণ্ডলীকৃত ধনুর ন্যায় বর্ত্তুলাকার তাঁহাদের নাভিমণ্ডলে সেই সরোবরের জল প্রবেশ করিত। (গ) সেই সরোবরের কোন্ স্থানে বরুণের হংসগণ পদ্মবনের মধুপান করিত। (ঘ) কোন স্থানে দিগ্‌হস্তিগণ অবগাহন করিবার সময়ে পুরাতন মৃণালগুলিকে ছিন্ন-ভিন্ন করিত। (ঙ) কোন স্থানে শিবের বৃষ, শৃঙ্গের অগ্রদ্বারা তীরের প্রস্তরখণ্ডগুলি ভাঙ্গিয়া ফেলিত। (চ) কোন স্থানে যমের মহিষ অবগাহন করিবার সময়ে শৃঙ্গের অগ্রদ্বারা

---

(१) पुण्योदकम्। (२) ...हंसाक्रान्तविकचकमलवनषण्ड', हंसाक्रान्तकमलमकरन्द'।

(३) ...मृणालजालदण्ड'। (४) ...धवलवृषभविषाणकोटि...।

क्वचिदैरावत-दशन-मुषल-(१) खण्डित-कुमुद-षण्डम्, (छ) यौवनमिवोत्-कलिकाबहुलम्, (ज) उत्कण्ठितमिव मृणालवलयालङ्कृतम्, (झ) महा-पुरुषमिव प्रकट-मीन-मकर-कूर्म्म-चक्र-लक्षणम्, (२) (ञ) षण्मुखचरितमिव श्रूयमाणक्रौञ्चवनिताप्रलापम्, (ट) भारतमिव पाण्डु-धार्त्तराष्ट्रकुल-पक्ष-क्षत-

---

(छ) क्वचिदिति। ऐरावतेन हस्तिना, दशनौ दन्तौ मुषलाविव दशनाविव मुषलाविति वा ताभ्यां खण्डितं विच्छिन्नं कुमुदषण्डं यस्मिन् तत्। अत्रोपमारूपकयोः सन्देहसङ्करः। एभिर्विशेषणैरच्छोदसरोवरस्य देवानां विहारस्थानत्वं सूचितम्।

(ज) यौवनमिति। यौवनं कालमिव, उत्कलिका उत्पन्नकोरका अनुरागोत्कण्ठाश्च यस्मिन् तत्। अत्र पूर्णोपमालङ्कारः। "चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः। उत्कण्ठोत्कलिके तस्मिन् भिक्षा तुभयोरपि।" इति शब्दार्णवः।

(झ) उदिति। उत्कण्ठितं प्रियजनविरहेणोन्मनस्कं जनमिव, मृणालवलयेन अलङ्कृतम्, एकत्र मदनतापादन्यत्र स्वभावादिति भावः। पूर्णोपमा।

(ञ) मह इति। महापुरुषं भाग्यवन्तं राजादिमिव, प्रकटाः स्पष्टं दृश्यमानाः, मीना मत्स्याः मकरा जलजन्तुविशेषाः, कूर्म्माः कच्छपाः, चक्राश्चक्रवाकाः, लक्षणाः सारसाश्च यस्मिन् तत्। पक्षान्तरे तु प्रकटानि स्पष्टानि मीनमकरकूर्म्मचक्रस्वरूपाणि लक्षणानि करचरणयो रेखात्मकचिह्नानि यस्य तम्। पूर्णोपमा। "लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्।" इति मेदिनी।

(ट) षण्मुखेति। षण्मुखचरितं कार्त्तिकेयचरित्रमिव, श्रूयमाणः क्रौञ्चवनितानां वकपक्षिणीनां प्रलापः कलरवो यस्मिन् तत्, अन्यत्र तु श्रूयमाणः क्रौञ्चवनितानां क्रौञ्चनामकदैत्यभार्य्याणां प्रलापो विलापो यस्मिन् तत्। पूर्णोपमा। मयासुरपुत्रः क्रौञ्चासुरः कार्त्तिकेयेन निहत इति हरिवंशवार्त्ता।

(ठ) भारतमिति। भारतं महाभारतमितिहासमिव, पाण्डूनां पाण्डुवर्णानां धार्त्तराष्ट्राणां कृष्णवर्णचञ्चुचरणविशिष्टानां हंसानां यत् कुलं समूहस्तस्य पक्षैः पतत्रैः क्षतः क्षोभः सञ्चालनं यस्य तत्। अन्यत्र तु पाण्डुकुलं पाण्डुराजवंशो युधिष्ठिरादिः तथा धृतराष्ट्रस्येदमिति धार्त्तराष्ट्रं कुलं दुर्य्योधनादि तयोः पक्षाभ्यां

---

ফেনস্তূপগুলি ইতস্ততঃ বিক্ষিপ্ত করিত। (ছ) কোন স্থানে ঐরাবত হস্তী দন্তমুষলদ্বারা কুমুদগুলি ছিঁড়িয়া ফেলিত। (জ) যৌবনকাল যেমন উৎকণ্ঠাতে পরিপূর্ণ থাকে, সেই সরোবরও তেমন উৎপন্ন কলিকাতে পরিপূর্ণ ছিল। (ঝ) প্রিয়বিরহে উৎকণ্ঠিত ব্যক্তির ন্যায় সেই সরোবরও মৃণালমণ্ডলে অলঙ্কৃত ছিল। (ঞ) মহাপুরুষের হস্তে ও পদে যেমন মৎস্য, মকর, কূর্ম্ম ও চক্রের চিহ্ন স্পষ্ট দেখা যায়, সেই সরোবরেও তেমন মৎস্য মকর, কূর্ম্ম, চক্রবাক ও সারসপক্ষিণী স্পষ্ট দেখা যাইত। (ট) কার্ত্তিকের চরিত্রে যেমন ক্রৌঞ্চ দৈত্যের ভার্য্যাগণের বিলাপের কথা শুনা যায়, সেই অচ্ছোদসরোবরেও তেমন বকপক্ষিণীগণের কলরব শুনা যাইতেছিল। (ঠ) মহাভারতে যেমন পাণ্ডুবংশ ও ধৃতরাষ্ট্রবংশ এই উভয়পক্ষকৃত

---

(१)...मुषल—। (२) मीन...प्रकटलक्षणं।

क्षोभम्, (ठ) अमृतमथनसमयमिव तीरावस्थित-(१) शिति-कण्ठ-पीयमान विषम्, (ड) कृष्णबाल-(२) चरितमिव तट-कदम्ब-शाखाधिरूढ़-(३) हरि-कृत-जल-प्रपात-क्रीड़म्, (ढ) मदनध्वजमिव मकराधिष्ठितम्, (ण) दिव्य-मिवानिमिषलोचनरमणीयम्, (त) अरण्यमिव विजृम्भमाणपुण्डरीकम्, (थ)

---

सहायभूताभ्यां योद्धृवर्गाभ्यां कृतः क्षोभः समरो यस्मिन् तत्। पूर्णोपमा। "धार्त्तराष्ट्राः सितेतरै"-रित्यमरः।

(ड) अमृतेति। अमृतमथनसमयमिव समुद्रमन्थनकालमिवेत्यर्थः, तीरावस्थितैः शितिकण्ठैर्मयूरैः पीयमानानि विषाणि जलानि यस्य तत्। अन्यत्र तु तीरावस्थितेन शितिकण्ठेन महादेवेन पीयमानं विषं समुद्रोत्थितं कालकूटं यस्मिन् तम्। पूर्णोपमा। "विषन्तु गरले तोये" इति मेदिनी। समुद्रमथनोत्थितं कालकूटं शिवः पपाविति महाभारतवार्त्ता।

(ढ) कृष्णेति। कृष्णस्य वासुदेवस्य बालचरितं शैशवक्रीड़ितमिव, तटे तीरे ये कदम्बा वृक्षास्तेषां शाखासु अधिरूढ़ैः हरिभिर्वानरैः हरिणा तेनैव वासुदेवेन च कृता जले प्रपात एव क्रीड़ा यस्मिन् तत्। पूर्णोपमा।

(ण) मदनेति। मदनध्वजं कन्दर्पस्य केतुमिव, मकरैस्तदाख्यैर्जलजन्तुविशेषैः मकरेण मकराकार-पुत्तलिकया च अधिष्ठितम्। पूर्णोपमा।

(त) दिव्येति। दिवि भवं दिव्यं स्वर्गीयं कञ्चिद्देवमिव, न विद्यते निमिषो निमेषो ययोस्तादृशी लोचने येषां तैर्मत्स्यैः रमणीयं, अन्यत्र तु अनिमिषे ये लोचने ताभ्यां रमणीयम्। देवमत्स्ययोरुभयोरेव निमेषाभावात्। पूर्णोपमा।

(थ) अरण्येति। अरण्यं महावनमिव, विजृम्भमाणानि विकासं भजमानानि पुण्डरीकाणि श्वेत-पद्मानि यस्मिन् तत्, अन्यत्र तु विजृम्भमाणा निद्राभङ्गानन्तरं स्वाङ्गान्यायच्छमानाः पुण्डरीका व्याघ्रा यस्मिन्

---

বৃক্ষের বৃত্তান্ত আছে, সেই সরোবরেও তেমন হংসগণের পক্ষের বায়ুতে জলের উদ্বেলন ছিল। (ড) সমুদ্রমন্থনের সময়ে যেমন মহাদেব তীরে থাকিয়া কালকূট বিষ পান করিয়াছিলেন, সেই সরোবরেও তেমন ময়ূরগণ তীরে থাকিয়া জল পান করিতেছিল। (ঢ) কৃষ্ণের শৈশব-চরিত্রে যেমন তিনি যমুনা-তীরস্থিত কদম্ব বৃক্ষের শাখাতে আরোহণ করিয়া তথা হইতে পুনরায় জলে পড়িয়া খেলা করিতেন, সেই সরোবরেও তেমন তীরস্থিত কদম্ববৃক্ষের শাখাতে আরোহণ করিয়া, পুনরায় তথা হইতে জলে পড়িয়া বানরগণ খেলা করিত। (ণ) কামদেবের ধ্বজে যেমন মকরাকৃতি পুত্তলিকা আছে, সেই সরোবরেও তেমন মকরনামে জলজন্তু ছিল। (ত) স্বর্গীয় দেবতা যেমন নিমেষহীন নয়নদ্বারা শোভা পান, সেই সরোবরও তেমন মৎস্যদ্বারা শোভা পাইত। (থ) মহাবনে যেমন ব্যাঘ্র নিদ্রাভঙ্গের পর হাই তোলে, সেই সরোবরেও

---

(१) तीरकान्तारावस्थित...। (२) बालकृष्ण...। (३)...आरूढ़...।

उरगकुलमिवानन्त-शतपत्र-पद्मोद्भासितम्, (द) कंसबलमिव मधुकरकुलोपगीयमान-(१) कुवलयापीड़म्, (ध) कद्रु-(२) स्तनयुगलमिव नागसहस्रपीत-पयोगण्डूषम्, (न) मलयमिव चन्दन-शिशिरवनम्, (प) असत्साधन-

तत्। पूर्णोपमा। "सिताम्भोजव्याघ्रयोः पुण्डरीकं पुंसि तु दिग्गजे। व्याघ्रे च कोशकारे च।" इति त्रिकाण्डशेषः।

(द) उरगेति। उरगकुलं सर्पवंशमिव, अनन्तैरसंख्यैः शतपत्रपद्मैः शतदलकमलैः उद्भासितं शोभितं अन्यत्र तु अनन्तेन वासुकिना, शतपत्रेण पद्मेन च नागविशेषेण उद्भासितम्। अत्र शतपत्रपद्मशब्दयोः पर्यायतया आपाततः पुनरुक्तताप्रतीतिः परन्तु शतदलान्वितपद्मार्थे पर्यवसानात् पुनरुक्तवदाभासोऽलङ्कारः पूर्णोपमा चानयोरङ्गाङ्गिभावेन सङ्करः।

(ध) कंसेति। कंसस्य उग्रसेनपुत्रस्य बलं सैन्यमिव, मधुकरकुलेन भ्रमरसमूहेन उपगीयमानानि स्वगानविषयीक्रियमाणानि कुवलयानि नीलोत्पलान्येव आपीडः शेखरो यस्य तत्, अन्यत्र तु मधुकरकुलेन भ्रमरगणेन उपगीयमानो मदजलसौरभलोभेनोपेत्य स्वगानश्रवणविषयीक्रियमाणः कुवलयापीड़स्तदाख्यो हस्तीन्द्रो यत्र तत्, अथवा मधौ मधुवने करो राजग्राह्यांशो येषां ते मधुकराः कंसादयस्तेषां कुलेन समूहेन उपगीयमानः प्रशस्यमानः कुवलयापीड़नामा हस्ती यत्र तत्। पूर्णोपमा।

(न) कद्रिति। कद्रोर्नागमातुः कश्यपभार्य्याविशेषस्य स्तनयुगलमिव, नागानां हस्तिनां सर्पाणाञ्च सहस्रेण समूहेन पीतः पयसां जलानां दुग्धानाञ्च गण्डूषो यस्मात् तत्। पूर्णोपमा।

(प) मलयमिति। मलयं पर्वतमिव, चन्दनवत् शिशिराणि शीतलानि वनानि जलानि यत्र तत्, अन्यत्र तु चन्दनानां तरूणां शिशिरवनं शीतलकाननं यत्र तम्। पूर्णोपमा। "वनं काननमम्बु च" इत्यनेकार्थध्वनिमञ्जरी।

(फ) असदिति। असत् साधनमिव हेत्वाभासदुष्टं हेतुमिव गोत्ववान् अश्वत्वादित्यादिसाध्याभाववत्-पक्षवृत्तिहेतुमिवेत्यर्थः, न दृष्टः केनाप्यवलोकितः अन्तः अवसानं यस्य तत् अतिवृहदित्यर्थः, अन्यत्र तु न विद्यते दृष्टान्तो निश्चितसाध्यवान् दृष्टान्ताख्यो न्यायावयवविशेषो यस्मिन् तत्, अतएवासत्साधनत्वमिति भावः।

তেমন শ্বেতপদ্ম বিকাস পাইতেছিল। (দ) সর্পবংশ যেমন অনন্ত, শতপত্র ও পদ্মনামক সর্প-দ্বারা শোভিত, সেই সরোবরও তেমন অসংখ্য শতদল পদ্মদ্বারা শোভিত ছিল। (ধ) কংসের সৈন্যগণমধ্যে যেমন ভ্রমরগণ-গুঞ্জন-শ্রবণ-পরায়ণ কুবলয়াপীড়নামে একটা হস্তী ছিল, সেই অচ্ছোদ সরোবরেও তেমন নীলোৎপলরূপ তাহার শিরোভূষণ ছিল এবং তাহার নিকটে ভ্রমরগণ গান করিতেছিল। (ন) কশ্যপপত্নী কদ্রুর স্তনযুগল হইতে যেমন সর্পগণ দুগ্ধ পান করিত, সেই সরোবর হইতেও তেমন হস্তিগণ জল পান করিত। (প) মলয়পর্ব্বতে যেমন শীতল চন্দনবন আছে, সেই সরোবরেও তেমন চন্দনের ন্যায় শীতল জল ছিল। (ফ) অসৎ হেতুর

(১)...উপনীয়মান...। (২) কদ্রূ...।

मिवादृष्टान्तम्, (फ) अतिमनोहरमाह्लादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान्। (ब)

आलोक-(१) मात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत् (२) अहो! निष्फलमपि मे तुरग-(३) मुखमिथुनानुसरणं एतदालोकयतः सरः सफलतामुपगतम्। अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम्, आलोकितः खलु रमणीयानामन्तः, दृष्ट आह्लादनीयानामवधिः, वीक्षिता मनोहराणां सीमान्तलेखा, प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः, विलोकिता (४) दर्शनीयानामवसानभूमिः (भ)। इदमुत्पाद्य सरःसलिलं अमृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः (म)। इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थ-

अत्र तत्सरोवरस्यान्तदर्शनसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः पूर्णोपमा चानयोरङ्गाङ्गिभावेन सङ्करः "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" इति गौतमसूत्रीयवात्स्यायनभाष्यम्।

(ब) अतीति। दृष्टेर्नयनस्य आह्लादनम्। अच्छानि निर्मलानि उदकानि यस्य तदच्छोदम्।

(भ) आलोकेति। आलोकमात्रेणैव दर्शनमात्रेणैव अपगतश्रमः, मनःप्रसादादिति भावः। दृष्ट्वा पुनर्विशेषेणावलोक्य। तुरगमुखमिथुनानुसरणं किन्नरद्वयानुगमनं। ईक्षणयुगलस्य नयनद्वयस्य। आह्लादयन्तीत्याह्लादनीयास्तेषां "कृत्यल्युटोऽन्यत्रापी"ति कर्त्तर्यनीयः, अवधिः शेषसीमा। अत्र चन्द्रापीडस्यानन्दमग्नतया विक्षेपेन च एकार्थस्यापि पुनः पुनरुक्तिर्न दोषाय विवादादौ कथितपदतावत्।

(म) इदमिति। इदं सरःसलिलं उत्पाद्य पुनरमृतरसं सुधाद्रवं उत्पादयता, वेधसा ब्रह्मणा, स्वसृष्टिः पुनरुक्ततां नीता प्रापितेव। अत्र क्रियोत्प्रेक्षालङ्कारः। एतेनास्यामृततुल्यत्वं व्यज्यते।

(य) ननु कथं पुनरुक्ततां नीतेत्याह इदमपीति। इदमपि सरःसलिलं कर्त्तृ। शिशिरतया शीतल-

যেমন দৃষ্টান্ত নাই, সেই সরোবরেরও তেমন শেষ সীমা দৃষ্টিগোচর হইত না। (ব) এবং সেই আচ্ছোদসরোবর অত্যন্ত সুন্দর ও নয়নের আহ্লাদজনক ছিল।

(ভ) সেই সরোবর দর্শনমাত্রেই চন্দ্রাপীড়ের পরিশ্রম দূরীভূত হইল, তখন তিনি বিশেষভাবে দেখিয়া এইরূপ মনে করিতে লাগিলেন—'প্রথমে, কিন্নর দুইটার অনুসরণ করা আমার নিষ্ফল হইয়াছিল, এখন এই সরোবর দেখিয়া সফলতা লাভ করিয়াছে। আজ আমার নয়নযুগলের দেখিবার জিনিষ দেখার ফল সমাপ্ত হইয়াছে; আজ আমি সুন্দর পদার্থের চূড়ান্ত দেখিলাম, আহ্লাদজনক বস্তুর শেষ দর্শন করিলাম, মনোহর পদার্থের শেষ সীমার রেখা দৃষ্টিগোচর করিলাম, আনন্দজনক পদার্থের পরিসমাপ্তি আজ প্রত্যক্ষ হইল এবং দেখিবার জিনিষের শেষ আজ দেখিলাম। (ম) বিধাতা এই সরোবরের জল সৃষ্টি করিয়া আবার অমৃত সৃষ্টি করায় আপনার সৃষ্টিকে যেন পুনরুক্তিদোষগ্রস্ত করিয়াছেন। (য) কারণ, এই সরোবরের জলও অমৃতের ন্যায় সকল ইন্দ্রিয়ের আহ্লাদ জন্মাইতে সমর্থ, অতএব নির্ম্মল বলিয়া

(१) आलोकन...। (२) मनस्यकरोत्। (३) तुरङ्ग...। (४) अवलोकिता।

मतिविमलतया चक्षुषः प्रीतिमुपजनयति, शिशिरतया स्पर्शसुखमुपहरति, (१) कमलसुगन्धितया घ्राणमाप्याययति, हंससुखरतया श्रुतिमानन्दयति, स्वादुतया रसनामाह्लादयति (य)। नियतञ्चास्यैव दर्शनतृष्णया न परित्यजति भगवान् कैलासनिवासव्यसनमुमापतिः (र)। न खलु साम्प्रतमाचरति जलशयनदोहदं देवः (२) रथाङ्गपाणिः, यदिदममृतरस-सुरभि-सलिलमपहाय लवण-रस-परुष-पयस्युदन्वति स्वपिति (ल)। नूनञ्चेदं न प्रथममासीत् सरः, येन प्रलय-वराह-

---

तया। उपहरति जनयति। कमलस्येव शोभनो गन्धोऽस्यास्तीति कमलसुगन्धि, मत्वर्थीय इन्प्रत्ययः तस्य भावस्तया हेतुना। न च "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इति निषेधात् कथमत्र मत्वर्थीय इन्प्रत्यय इति वाच्यम्, अत्र प्रशंसायामिन्प्रत्ययात् तदर्थस्य तु बहुव्रीहिणा वक्तुमशक्यत्वात्, अतएव च बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इत्यभिधानात्। एतत्तु मालतीमाधवटीकायां भावमनोहरायामस्माभिर्विशेषेण विवेचितम्। घ्राणमाप्याययति नासिकां प्रीणयति। हंससुखरतया हंसशब्दैः शब्दायमानतया, श्रुतिं कर्णं। रसनां जिह्वां। अतएव सर्वथैवामृतोपमतया पुनरमृतसृष्टिः पुनरुक्ततामिव नीतेति भावः।

(र) नियतमिति। उमापतिः शिवः, कैलासनिवासे व्यसनमासक्तिं न परित्यजतीति नियतं निश्चितम्, अन्यथान्यत्र तिष्ठेदिति भावः। अत्र ध्रुवशब्दसमानार्थकनियतशब्दोपादानात् वाच्या अभावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः।

(ल) नेति। देवो रथाङ्गपाणिश्चक्रपाणिर्नारायणः, जलशयनस्य दोहदमभिलाषं न खलु साम्प्रतं युक्तं आचरति। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। यद् यस्मात्, अमृतस्येव रसो यस्य तदमृतरसं सुरभि च सलिलं यस्य तदिदं सरः, अपहाय त्यक्त्वा लवणरसेन परुषाणि रूक्षाणि पयांसि जलानि यस्य तस्मिन् उदन्वति समुद्रे स्वपिति। यदि जलशयनाभिलाषं युक्तिसङ्गतमेवाचरिष्यत् तदा लवणजलं जलधिमपहाय अस्मिन्नेवामृतोपमजले ध्रुवमस्वप्स्यदिति भावः।

(व) नूनमिति। प्रलये कल्पान्तकाले वराहस्य यज्ञवराहस्य घोणाया नासिकायाः अभिघातात् भीता। दन्ताग्रोत्थापनकाले नासिकाघातः सम्भवत्येवेति द्रष्टव्यम्। भूतधात्री पृथिवी, कलसयोनिना अगस्त्येन

---

নয়নের আনন্দ জন্মাইতেছে, শীতল বলিয়া স্পর্শসুখ জন্মাইয়া থাকে, পদ্মের ন্যায় সুগন্ধি বলিয়া নাসিকার তৃপ্তি করিতেছে, হংসগণের শব্দে শব্দায়মান বলিয়া কর্ণের আনন্দ জন্মাইতেছে এবং সুস্বাদু বলিয়া রসনারও তৃপ্তি করিয়া থাকে। (র) ভগবান্ মহাদেব এই সরোবর-দর্শনের অভিলাষেই নিশ্চয়ই কৈলাসপর্ব্বতে বাস করিবার আসক্তি ত্যাগ করিতেছেন না। (ল) ভগবান্ নারায়ণও যুক্তিসঙ্গতভাবে জল-শয়নের অভিলাষ করিতেছেন না; যেহেতু—অমৃতের ন্যায় সুস্বাদু ও সুগন্ধি জলে পরিপূর্ণ এই সরোবর ত্যাগ করিয়া তিনি লবণরসে কটুজল-সমন্বিত সমুদ্রে শয়ন করিতেছেন। (ব) এবং নিশ্চয়ই এই সরোবর পূর্ব্বে ছিল না; যেহেতু—পৃথিবী, প্রলয়কালে যজ্ঞবরাহের নাসিকার আঘাতে ভীত হইয়া সমুদ্রমধ্যে

---

(१) उपाहरति। (२)—दोहदमितः।

घोणाभिघात-भीता (१) भूतधात्री कलसयोनि-पान-परिकलित-सकल-सलिलं सागरमवतीर्णा, अन्यथा यद्यत्रागाधपाताल-(२) गम्भीराम्भसि निमग्ना भवेन्महा-सरसि, किमेकेन, महावराह-सहस्रैरपि नासादिता भवेत् (व)। नूनमस्मादेव सलिललेशमादायादाय (३) महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारित-दशदिशः प्लावयन्ति भुवनान्तराणि (श)। मन्ये च यत् (४) सृष्टेरर्वाक् सलिलमयं ब्रह्माण्डरूपमादौ भुवनमभूत्, तदिदं पिण्डीभूय (५) सरोव्यपदेशेनावस्थितम्।' (ष)

---

पानाय परिकलितं सम्भावितं सकलं सलिलं यस्य तं; एतेनास्य क्षुद्रत्वं सूचितं, सागरमवतीर्णा पलायनाय समुद्रं प्रविष्टा। अन्यथा यदीदं सरः प्रथममासीदित्यर्थः, यदि च अगाधपातालवत् गम्भीरमतलस्पर्शं अम्भो जलं यत्र तादृशे अत्र महासरसि निमग्ना भवेत् सा भूतधात्रीति शेषः, तदा एकेन तेन वराहेण किं, महा-वराहसहस्रैरपि आसादिता प्राप्ता न भवेत्। सुतरां नूनमिदं सरः प्रथमं नासीदिति भावः। अत्र नून-मित्यादिवाक्ये अभावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः। तावता वाक्येन च व्यतिरेकालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः।

(श) नूनमिति। सलिललेशं जलबिन्दुं। प्रलयस्य पयोदा मेघाः, प्रलये यद् दुर्दिनं गाढान्धकारस्तेन अन्धकारिताः सञ्जातान्धकाराः दश दिशो यैस्ते तादृशाः सन्तः। भुवनान्तराणि जगन्मध्यदेशान्। अत्र भावा-भिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तथा प्रलयशब्दस्य पुनः पुनः पाठादनवीकृतत्वदोषः, स तु परवर्त्ति-प्रलयशब्दयोः परित्यागेन परिहरणीयः।

(ष) मन्ये इति। किञ्च, सृष्टेरर्वाक् प्राण्यादिसृष्टेः पूर्वम्। अभूदासीत्। तत् सलिलं पिण्डीभूय एकत्र समवेतीभूय सरोव्यपदेशेन सरोवरच्छलेन इदमवस्थितमित्यहं मन्ये। अत्रापि भावाभिमानिनी वाच्या सापह्नवा क्रियोत्प्रेक्षालङ्कारः, तथा सृष्टेरर्वागित्यभिधाय पुनरादावित्यभिधानादधिकपदतादोषः, सोऽपि आदावित्यस्य परित्यागेन समाधेयः। सृष्टेः प्राक् भुवनस्य सलिलमयत्वे प्रमाणं यथा मनुः—"अप एव ससर्जादौ तासु बीजमवासृजत्।"

---

প্রবেশ করিয়াছিলেন, এদিকে কিন্তু মহর্ষি অগস্ত্য সে সমুদ্রের সমস্ত জলই পান করিবার জন্য মনে মনে স্থির করিয়া রাখিয়াছিলেন; যদি এই সরোবর পূর্ব্বেও থাকিত এবং অগাধ পাতালের ন্যায় গভীর জলে পরিপূর্ণ এই মহা সরোবরে পৃথিবী নিমগ্ন হইয়া থাকিতেন, তবে এক যজ্ঞবরাহ কেন, মহাবরাহসহস্রও তাঁহাকে ধরিতে পারিত না। (শ) এবং নিশ্চয়ই প্রলয়কালে মেঘসমূহ এই সরোবর হইতেই জলবিন্দু সকল গ্রহণ করিয়া করিয়া, প্রলয়কালের সেই গাঢ় অন্ধকারে দশদিক্ অন্ধকার করিয়া জগতের মধ্যস্থান সকল প্লাবিত করিয়া থাকে। (ষ) আর আমি মনে করি—সৃষ্টির পূর্ব্বে যে এই জগৎসংসার জলময় ব্রহ্মাণ্ডস্বরূপ ছিল, সেই জলরাশিই একত্র সমবেত হইয়া সরোবরচ্ছলে এই অবস্থান করিতেছে।'

---

(१)...अभिभूता। (२) अगाधानिकपाताल...। (३) क्वचित् विवक्षिर्नास्ति। (४) यत्तत्। (५) पिण्डीभूतं।

इति विचारयन्नेव तस्य शिला-शकल-कर्कश-वालुकाप्रायं विद्याधरोद्धृत-सनाल-कुमुद-कलापार्च्चितानेक (१) चारु-सैकत-लिङ्गम्, अरुन्धती-दत्त-दिनकरार्घ्य-(२) पयः पर्य्यस्त-रक्त-(३) कमल-शोभितम्, उपकूल-शिलातलोपविष्ट-जलमानुष-निषेव्यमाणातपम्, अभ्यर्णतया च कैलासस्य स्नानागतमातृमण्डल-पद-पङ्क्ति-मुद्राङ्कितम्, (४) अवकीर्ण-(५) भस्म-सूचित-मग्नोत्थित-गण-वृन्दोद्धूलनम्, (६) अवगाहावतीर्ण-(७) गणपति-गण्डस्थल-गलित-मद-(८) प्रस्रवण-सिक्तम्, अति-

---

(स) इतीति। इति विचारयन्नेव चन्द्रापीडस्तस्य सरोवरस्य दक्षिणं तीरमासाद्य तुरगादवततार इत्यन्वयः। अत्र क्रोड़े द्वितीयान्तपदानि तीरमित्यस्य विशेषणानि। शिलाशकलवत् प्रस्तरखण्डवत् कर्कशाः कठिनाः वालुकाः प्रायेण बाहुल्येन यस्मिन् तत्। विद्याधरैर्देवयोनिविशेषैरुद्धृतैः सनालानां कुमुदानां कलापेन समूहेन अर्च्चितानि पूजितानि अनेकानि चारूणि सैकतलिङ्गानि वालुकामयशिवलिङ्गानि यस्मिन् तत्। अरुन्धत्या वशिष्ठभार्य्यया दत्तं दिनकराय सूर्य्याय यदर्घ्यं तस्य पयसो जलात् पर्य्यस्तैः प्रभ्रष्टैः रक्तकमलैः शोभितम्। उपकूले तीरसमीपे शिलातलेषु उपविष्टैर्जलमानुषैर्मानुषाकृतिजलजन्तुविशेषैः निषेव्यमाण आतपः सूर्य्यकिरणो यत्र तत्। कैलासस्य पर्व्वतस्य च अभ्यर्णतया आसन्नतया हेतुना, स्नानाय आगतस्य मातृमण्डलस्य ब्राह्मीप्रभृतिमातृगणस्य पदपङ्क्तेश्चरणश्रेण्याः मुद्राभिश्चिह्नैरङ्कितम्। अवकीर्णैर्विक्षिप्तैर्भस्मभिः सूचितानि अनुमापितानि मग्नोत्थितानां अवगाहनानन्तरोत्तीर्णानां गणानां प्रमथानां वृन्दस्य समूहस्य उद्धूलनानि धूलिवन्मर्द्दनानि त्रिपुण्ड्रादिविधानार्थं धूलिवत् सूक्ष्मकरणाय भस्मनां पेषणानि यस्मिन् तत्। स्नात्वा धूलय इत्युद्धूलयतामासां करणमित्युद्धूलनं करीषोद्धूलनादुद्धूलिश्चाहादि सूत्। अवगाहाय अवतीर्णस्य अवतरीतुं चलितस्य गणपतेर्गजाननस्य गण्डस्थलात् गलितस्य मदस्य दानजलस्य प्रस्रवणेन धारया सिक्तम्।

---

(স) চন্দ্রাপীড় এইরূপ মনে মনে বিতর্ক করিতে করিতে সেই অচ্ছোদসরোবরের দক্ষিণ তীরে যাইয়া অশ্ব হইতে অবতরণ করিলেন। সেই দক্ষিণ তীরে পাষাণখণ্ডের ন্যায় অত্যন্ত কঠিন বহুতর বালি ছিল, বিদ্যাধরগণ নালের সহিত কুমুদসমূহ উত্তোলন করিয়া তাহাদ্বারা সুন্দর সুন্দর বহুতর বালুকাময় শিবলিঙ্গের পূজা করিয়াছিল; অরুন্ধতীদেবী সূর্য্যকে যে অর্ঘ দিয়াছিলেন, তাহার রক্তপদ্মগুলি, তাহারই জল হইতে দূরে পড়িয়া শোভা জন্মাইতেছিল; কতকগুলি জলমানুষ তীরের নিকটে পাথরের উপর বসিয়া রৌদ্র সেবন করিতেছিল; এবং কৈলাসপর্ব্বত নিকটবর্ত্তী বলিয়া তথা হইতে ব্রাহ্মীপ্রভৃতি মাতৃগণ স্নান করিবার নিমিত্ত আসিয়াছিলেন, তাঁহাদের চরণের চিহ্নশ্রেণীতে সে স্থানটি চিহ্নিত ছিল; কতকগুলি ভস্ম ইতস্ততঃ বিক্ষিপ্ত থাকিয়া ইহাই প্রকাশ করিয়াছিল যে, প্রমথগণ অবগাহনপূর্ব্বক উঠিয়া ভস্মের তিলক ধারণ করিবার নিমিত্ত কতকগুলি ভস্ম, ধূলির মত করিবার জন্য পেষণ করিয়া-

---

(१)...अर्च्चितं। (२)...दत्तार्घ्य...। (३)...आरक्त...। (४)...मण्डलमुद्राङ्कितं।
(५) अवतीर्ण...। (६)...कदम्बक...। (७) अवगाहनावतीर्ण...। (८)...गण्डस्थलमद...

प्रमाण पादानुमीयमान-(१) तृषित-कात्यायनी-सिंहावतरण-(२) मार्गम्, दक्षिण-(३) तीरमासाद्य तुरगादवततार। (स)

अवतीर्य्य च व्यपनीतपर्य्याणमिन्द्रायुधमकरोत् (ह)। क्षितितल-लुठितो-त्थितञ्च गृहीत-कतिपय-यवसग्रासं सरोऽवतार्य्य (४) पीत-सलिलमिच्छया स्नातं चोत्थाप्यान्यतमस्य समीपवर्त्तिनस्तरोर्मूलशाखायामपगतखलीनं हस्तपाश-शृङ्खलया कनकमय्या चरणौ (५) बद्ध्वा कृपाणिकावलूनान् छित्त्वा चाग्रतः कतिचित् सरस्तीरप्ररूढ़दूर्वा-(६) प्रवालकवलान्, स्वयमपि (७) सलिलमवत-तार (क्ष)। ततश्च प्रक्षालितकरयुगलः (८) चातक इव कृत्वा जलमय-

तथा अतिप्रमाणैरतिवृहद्भिः पादैः पादचिह्नैः अनुमीयमानः तृषितस्य सञ्जातपिपासस्य कात्यायनीसिंहस्य दुर्गाया वाहनभूतसिंहस्य अवतरणमार्गो यस्मिन् तत्।

(ह) अवेति। व्यपनीतं अपसारितं पर्य्याणं पल्ययनं यस्य तं तादृशम्।

(क्ष) क्षितीति। किञ्च, आदौ क्षितितले लुठितः पर्य्याणापनयनानन्तरमेव लुण्ठितः अनन्तरमुत्थितस्तं, अयमश्वस्वभावः, गृहीताः कतिपये यवसानां घासानां ग्रासा येन तं इन्द्रायुधं। अपगतः खलीनः कविका यस्य तं। हस्तपाशौ हस्तबन्धनरज्जुस्तद्रूपा या शृङ्खला तया। कृपाणिकया छुरिकया अवलूनान् छिन्नान्। सरस्तीरप्ररूढ़दूर्वाणां प्रवालकवलान् पल्लवग्रासान्, अग्रतः छित्त्वा इन्द्रायुधस्य सम्मुखे संस्थाप्य च, स्वयमपि चन्द्रापीड़ः सलिलमवततार।

(क) तत इति। जलमयमाहारं कृत्वा उदरं परिपूर्य्य जलं पीत्वेत्यर्थः। चक्राह्वश्चक्रवाकः।

ছিলেন; স্নান করিতে যাইবার সময়ে গণেশের গণ্ডস্থল হইতে মদজল নিঃসৃত হইয়া সেই স্থানটা সিক্ত করিয়াছিল; আর বৃহৎ বৃহৎ পদচিহ্ন দেখিয়া ইহাই অনুমান হইতেছিল যে, এইটাই পিপাসার্ত্ত দুর্গার সিংহের জলে নামিবার পথ।

(হ) চন্দ্রাপীড় অবতরণ করিয়া ইন্দ্রায়ুধের পালান খুলিয়া দিলেন। (ক্ষ) তখন ইন্দ্রায়ুধ ভূতলে লুণ্ঠিত হইয়া পুনরায় উঠিয়া, কয়েকটি ঘাসের গ্রাস মুখে লইল; তাহার পর চন্দ্রাপীড় তাহাকে জলে নামাইলেন, তখন সে, ইচ্ছানুসারে জল পান করিল ও স্নান করিল, পরে চন্দ্রাপীড় তাহাকে তীরে উঠাইয়া কড়িয়াল খুলিয়া নিজের হস্তস্থিত স্বর্ণময় শৃঙ্খলদ্বারা, নিকটবর্ত্তী কোন বৃক্ষের মূলের শাখাতে তাহার চরণদ্বয় বন্ধন করিয়া, ছুরিকা-দ্বারা সরোবরের তীরজাত দূর্ব্বার কতকগুলি পল্লব কাটিয়া, সেগুলি ইন্দ্রায়ুধের সম্মুখে রাখিয়া আপনিও যাইয়া জলে নামিলেন। (ক) তাহার পর হস্ত প্রক্ষালন করিয়া, চাতকের ন্যায়

(१)...पद...। (२)...अवतार...। (३) दक्षिणं। (४) अवतीर्य्यं। (५) चरणौ।
(६) सरस्तीरदूर्वा...। (७) पुनरपि। (८)...करचरणयुगलः।

पुञ्जीकृताम्, (द) सर्वहंसैरिव धवलतया कृतसंविभागाम्, (ध) धर्म्म-हृदयादिव विनिर्गताम्, (१) शङ्खादिवोत्कीर्णाम्, मुक्ताफलादिवाकृष्टाम्, मृणालैरिव विरचितावयवाम्, दन्तदलैरिव घटिताम्, इन्दुकरकूर्च्चकैरिव प्रक्षालिताम्, (२) वर्णसुधाच्छटाभिरिव च्छुरिताम्, (३) अमृतफेनपिण्डैरिव पाण्डुरीकृताम्, पारदरसधाराभिरिव धौताम्, रजतद्रवेणेव निर्म्मृष्टाम्, चन्द्रमण्डलादिवोत्कीर्णाम्, कुटज-कुन्द-सिन्धुवार-(४) कुसुम-च्छविभिरिवोल्लासिताम्, (न) इयत्तामिव धवलिम्नः, (प) स्कन्धावलम्बिनोभिरुदयतटगतादर्क-(५) बिम्बादु-

(द) शुक्लेति। पुञ्जीकृतां विधात्रा स्तूपीकृतां शुक्लपक्षाणां परम्परां राजिमिव। पक्षाणां कालत्वेन द्रव्यत्वादत्र जात्युत्प्रेक्षालङ्कारः।

(ध) सर्वेति। सर्वहंसैः धवलतया स्वस्वशुभ्रतागुणेन करणेन कृतः संविभागः विभज्य प्रतिपादनं यस्यै तां समर्पितस्वस्वशुभ्रतामिवेत्यर्थः। अत्र विभागकरणोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

(न) धर्म्मेति। धर्म्मस्य हृदयाद्विनिर्गतामिव। शङ्खादुत्कीर्णामिव। शङ्खं निखाय बहिष्कृतामिव। मुक्ताफलान्मौक्तिकात् आकृष्टामाविर्भावितामिव। मृणालैर्विरचितावयवां निर्म्मिताङ्गीमिव। दन्तदलैर्हस्तिदन्तखण्डैः घटितां निर्म्मितामिव। इन्दुकराश्चन्द्ररश्मय एव कूर्चकास्तूलिकास्तैः प्रक्षालितां परिष्कृत्य धौतामिव। अत्र निरङ्गकेवलरूपकक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। वर्णसुधानां शुक्लताविधायकसुधाख्यलेपनद्रव्याणां छटाभिः समूहैः छुरितां लिप्तामिव। पारदरसस्य पारदद्रवस्य धाराभिर्धौतामिव। अत्र पारदरसशब्दयोः पर्य्यायतया आपाततः पुनरुक्तताप्रतीतेः परन्तु रसशब्दस्य द्रवार्थे पर्य्यवसानात् पुनरुक्तवदाभासः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः। रजतद्रवेण रौप्यरसेन निर्म्मृष्टां परिमृष्टामिव। उल्लासितां परिशोभिताम्। एषासुक्तेतरत्र प्रत्येकविशेषणे क्रियोत्प्रेक्षालङ्कारः।

(प) इयत्तामिति। धवलिम्नः शुभ्रतायाः इयत्तां चरमसीमामिव। गुणोत्प्रेक्षा।

পানের মত্ততাবশতঃ তাঁহার ঘূর্ণন করায় পরিশ্রমে পড়িয়া গিয়াছিল; (দ) বিধাতা শুক্লপক্ষশ্রেণীকে যেন পুঞ্জীভূত করিয়া রাখিয়াছিলেন; (ধ) সকল হংসগণ যেন স্ব স্ব ধবলগুণ তাহাকে বিভক্ত করিয়া দিয়াছিল; (ন) সে যেন ধর্ম্মের হৃদয় হইতে নির্গত হইয়াছিল; বিধাতা যেন তাহাকে শঙ্খ খোদিত করিয়া বাহির করিয়াছিলেন, মুক্তা হইতেই যেন নিষ্কাশিত করিয়াছিলেন, মৃণালদ্বারাই যেন তাহার অঙ্গগুলি নির্ম্মাণ করিয়াছিলেন, গজ-দন্ত-খণ্ডদ্বারাই যেন গড়াইয়াছিলেন, চন্দ্রকিরণরূপ কুঁচোদ্বারাই যেন প্রক্ষালন করিয়া পরিষ্কার করিয়া দিয়াছিলেন, চূর্ণলেপদ্বারাই যেন লেপিয়া দিয়াছিলেন, অমৃতের ফেনপুঞ্জদ্বারাই যেন শুভ্রবর্ণ করিয়াছিলেন, পারার রসের ধারাতেই যেন ধুইয়া দিয়াছিলেন, রূপার রসেই যেন মাজিত করিয়াছিলেন, চন্দ্রমণ্ডল হইতেই যেন খোদিত করিয়া বাহির করিয়াছিলেন এবং কুটজ, কুন্দ ও নিসিন্দা ফুলের প্রভাদ্বারাই যেন শোভিত করিয়া দিয়াছিলেন; (প) আর

(१) निर्गतां, उद्गतां। (२) आक्षालितां। (३) आच्छुरितां। (४)...सिन्दुवार...। (५)...गतार्क...।

हृत्य बालरश्मिप्रभाभिरिव निर्म्मिताभिरुन्मिषत्तड़ित्तरल-(१) तेजस्ताम्राभिरचिरस्नानावस्थित-विरल-वारि-कणतया प्रणाम-लग्न-पशुपति-चरण-भस्म-चूर्णाभिरिव जटाभिरुद्भासितशिरोभागाम्, (फ) जटापाश-ग्रथितमुत्तमाङ्गेन मणिमयं नामाङ्कमीश्वर-चरणद्वयमुद्वहन्तीम्, (ब) रवि-रथ-तुरग-खुर-मुख-क्षुण्ण-(२) नक्षत्र-क्षोद-विशदेन भस्मनालङ्कृत-(३) ललाटपट्टिकाम्, शिखर-शिलाश्लिष्ट-शशाङ्ककलामिव शैलराजमेखलाम्, (भ) अतुलभक्तिप्रसाधितया लक्ष्यीकृतलिङ्गया

---

(फ) स्कन्धेति उदयतटगतादुदयाचलप्रदेशस्थितात् अर्कबिम्बात् सूर्य्यमण्डलात् उद्धृत्य बालरश्मिप्रभा एव उत्तोल्य ताभिर्बालरश्मिप्रभाभिर्नूतनकिरणदीप्तिभिः करणैः विधात्रा निर्म्मिताभिरिव स्थिताभिः, उन्मिषन्ती प्रकाशमाना या तड़ित् विद्युत् तस्या यत्तरलं तेजस्तद्वत्ताम्राभिस्ताम्रवर्णाभिः, तथा अचिरकालेन अवस्थिताः विरला अल्पाल्पा वारिकणा यासु तासां भावस्तया हेतुना प्रणामे नमस्कारसमये लग्नानि पशुपतेः शिवस्य चरणभस्मचूर्णानि यासु ताभिरिव स्थिताभिर्जटाभिः उद्भासितः शोभितः शिरोभागो यस्यास्ताम्। अत्र उद्धृत्यादौ क्रियोत्प्रेक्षा, उन्मिषदित्यादौ लुप्तोपमा, प्रणामेत्यादौ च क्रियोत्प्रेक्षा, इत्यासामङ्गाङ्गिभावेन सङ्करः।

(ब) जटेति। उत्तमाङ्गेन मस्तकेन, जटापाशग्रथितं मणिमयं मणिनिर्म्मितं नाम्नः शिवनाम्नः अङ्कश्चिह्नं यत्र तादृशं, ईश्वरस्य शिवस्य चरणद्वयं पदद्वयप्रतिमां उद्वहन्तीं भक्तिभरेण धारयन्तीम्।

(भ) रवीति। रविरथस्य तुरगाणामश्वानां खुरमुखैः खुराग्रभागैः क्षुण्णानां विदारितानां नक्षत्राणां क्षोदवच्चूर्णवत् विशदेन शुभ्रेण भस्मना भस्मकृततिलकेन अलङ्कृतः ललाटपट्टो भालफलकं यस्यास्ताम्, अतएव शिखरशिलया मध्यभागस्थप्रस्तरेण आश्लिष्टा धृता शशाङ्ककला चन्द्ररेखा यस्यास्तां शैलराजस्य हिमालयस्य मेखलां नितम्बं मध्यभागमिव स्थिताम्। अत्र पदार्थहेतुकं काव्यलिङ्गं तथा चन्द्रकलया सह भस्मतिलकस्य, शुभ्रशिलया सह ललाटपट्टस्य, मेखलया च सह कन्यायाः साम्यमिति द्रव्योत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

---

তাহাকে যেন শুভ্রবর্ণের চরম সীমা বলিয়া বোধ হইতেছিল; (ফ) দেদীপ্যমান বিদ্যুতের তরল তেজের ন্যায় তাম্রবর্ণ এবং স্কন্ধপর্য্যন্ত পতিত কতকগুলি জটাদ্বারা, তাহার মস্তক পরিশোভিত ছিল; বিধাতা, উদয়াচলগত সূর্য্যমণ্ডল হইতে নূতন কিরণ বাহির করিয়া তাহার দীপ্তিদ্বারাই যেন সেই জটাগুলিকে নির্ম্মাণ করিয়াছিলেন, এবং অনতিপূর্ব্বে স্নান করায় তখনও জটাগুলির উপরে অল্প অল্প জলবিন্দু ছিল, সুতরাং প্রতীতি হইতেছিল যেন, সে প্রণাম করিবার সময়ে শিবের চরণের ভস্ম-রেণুগুলি জটার উপরে লাগিয়া রহিয়াছে; (ব) এবং সে মস্তকে শিব-নামাঙ্কিত মণিময় দুখানি শিবের চরণ, জটাতে বন্ধন করিয়া ধারণ করিতেছিল; (ভ) সূর্য্যের রথে নিযুক্ত ঘোটকগণের খুরাগ্রের আঘাতে চূর্ণীকৃত-নক্ষত্রচূর্ণের ন্যায় শুভ্রবর্ণ ভস্মের তিলকে তাহার ললাটদেশ অলঙ্কৃত ছিল; সুতরাং শৃঙ্গের প্রস্তরের উপরে চন্দ্রকলা সংলগ্ন হইলে হিমালয়ের মেখলার ন্যায় তাহাকে দেখা

---

(१)...तड़िच्चञ्चलतरल...। (२)...तुरङ्गखुरक्षुण्ण...। (३) कृत...।

द्वितीययेव (१) पुण्डरीकमालया दृष्ट्या सम्भावयन्तीं भूतनाथम्, (म) अनवरत-गीत-परिस्फुरिताधरपुटवशात् (२) अतिशुचिभिः शुद्धहृदयमयूखैरिव गीतगुणैरिव स्वरैरिव स्तुतिवर्णैरिव मूर्त्तिमद्भिर्मुखान्निष्पतद्भिर्दशनांशुभिः पुनरिव स्नपयन्तीं गौरीपतिम्, (३) (य) अतिविमलैश्च वेदार्थैरिव साक्षात् पितामहमुखादाकृष्टैः, गायत्रीवर्णैरिव ग्रथिततां-(४) उपगतैः, नारायणनाभिपुण्डरीकवीजैरिवोद्धृतैः, सप्तर्षिभिरिव कर-(५) स्पर्शपूतमात्मानमिच्छद्भिस्तारकारूपेणा-

(म) अतुलेति। अतुलया निरुपमया भक्त्या प्रसाधिता प्रसन्नताजननेनालङ्कृता तया, लक्ष्यीकृतं विषयीकृतं लिङ्गं शिवमूर्त्तिर्यया तया, द्वितीयया पुण्डरीकमालयेव श्वेतपद्मश्रेण्येव स्थितया, दृष्टेरपि श्वेतत्वादिति भावः, दृष्ट्या भूतनाथं शिवं सम्भावयन्तीं सादरमवलोकयन्तीम्। अत्र जात्युत्प्रेक्षालङ्कारः।

(य) अनेति। अनवरतं गीतेन परिस्फुरितं परिस्पन्दितं यदधरपुटमोष्ठयुगलं तद्वशात्, मुखात् निष्पतद्भिर्निर्गच्छद्भिः, अतिशुचिभिरत्यन्तशुभ्रैः, शुद्धहृदयस्य पवित्रचित्तस्य मयूखैः किरणैरिव, मूर्त्तिमद्भिः गीतगुणैर्गानमाधुर्य्यैरिव, स्वरैर्निषादादिध्वनिभिरिव, स्तुतिवर्णैः शिवस्तवाक्षरैरिव स्थितैः, दशनांशुभिर्दन्तरश्मिभिः, गौरीपतिं शिवं पुनः स्नपयन्तीमिव स्थिताम्। मूर्त्तिमद्भिरिति गीतगुणैरित्यादीनां त्रयाणामेव विशेषणं, पूजारम्भे सकृत् स्नपनात् पुनः पदमिति बोध्यम्। अत्र प्रथमास्तिस्रो गुणोत्प्रेक्षाः शेषा च क्रियोत्प्रेक्षा इत्येतासामङ्गाङ्गिभावेन सङ्करः।

(र) अतीति। किञ्च। अतिविमलैरिति मुक्ताफलैरिति वक्ष्यमाणस्य विशेषणम्। पितामहस्य ब्रह्मणो मुखादाकृष्टैराकृष्यानीतैः साक्षाद्वेदार्थैरिव, निरतिशयसत्यतया तेषामप्यतिविमलत्वादिति भावः। ग्रथिततां संयोजनमुपगतैः गायत्र्याः स्वनामख्यातस्य वैदिकमन्त्रविशेषस्य वर्णैरक्षरैरिव, तेषामपि ब्रह्मरूपतया निर्म्मलत्वादिति भावः। उद्धृतैरुत्तोलितैः नारायणस्य नाभिपुण्डरीकवीजैरिव। तथा आत्मानं स्वस्वदेहं करस्पर्शेन जपकाले तस्याः कन्यकायाः पाणिस्पर्शेन पूतं पवित्रं कर्त्तुमिच्छद्भिः, तारकारूपेण नक्षत्रभावेनागतैः, मुक्तानां नक्षत्रवदुज्ज्वलत्वादितिभावः, सप्तर्षिभिर्मरीच्यादिभिरिव स्थितैः, तथा आमलकीफलवत् स्थूलैः,

যাইতেছিল ;* (ম) অতুলনীয় ভক্তিতে পরিশোভিত ও দ্বিতীয় শ্বেতপদ্মমালার ন্যায় নির্ম্মল দৃষ্টিদ্বারা সে, শিবমূর্ত্তিকে লক্ষ্য করিয়া আদরের সহিত শিবকে দেখিতেছিল ; (য) অনবরত গান করায় কন্যাটির ওষ্ঠযুগল স্পন্দিত হইতেছিল ; সুতরাং মুখ হইতে নির্গত অত্যন্ত নির্ম্মল দন্ত-রশ্মিদ্বারা সে যেন পুনরায় শিবকে স্নান করাইতেছে বলিয়া বোধ হইতেছিল ; সেই দন্ত-রশ্মিগুলিকে, তাহার পবিত্র হৃদয়ের কিরণের ন্যায় এবং মূর্ত্তিমান্ গানের মাধুর্য্যের ন্যায়, মূর্ত্তিমান্ স্বরলহরীর ন্যায় ও মূর্ত্তিমান্ স্তবের অক্ষরের ন্যায় দেখা যাইতেছিল ; (র) আমলকীফলের ন্যায় বড় বড় ও অত্যন্ত নির্ম্মল মুক্তাদ্বারা গ্রথিত এক ছড়া জপের মালা তাহার কণ্ঠদেশে লম্বিত ছিল ; ব্রহ্মার মুখ হইতে আকর্ষণ করিয়া আনীত সাক্ষাৎ বেদার্থের

(१) अपरयेव। (२)...गीतस्फुरित...। (३) पुनरपि...गौरीनाथं।
(४) ग्रथनतां, ग्रन्थनां, ग्रथनस्फीततां। (५) करतल...।

गतैः, आमलकीफलस्थूलैर्मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठितकण्ठभागाम्, परिवेश-(१) परिगत-चन्द्रमण्डलामिव पौर्णमासीनिशाम्, (२) (र) अधोमुख-हर-शिरः-कपाल-मण्डलाकारेण मोक्ष-पुर-द्वार-कलस-(३) कान्तिना स्तनयुगलेन, एक-हंस-मिथुन (४) सनाथामिव गङ्गाम्, (५) (ल) गौरीसिंहसटामयेनेव चामर-रुचिराकृतिना (६) स्तनयुगलमध्यनिबद्धग्रन्थिना कल्पतरु-लतावल्कलेन

मुक्ताफलैर्मौक्तिकैः उपरचितेन विहितेन अक्षवलयेन जपमालया अधिष्ठित आश्रितः कण्ठभागो यस्यास्ताम्, अतएव परिवेशेन परिधिना परिगतं परिवेष्टितं चन्द्रमण्डलं यस्यां तां पौर्णमासीनिशामिव स्थिताम्। अत्र प्रथमायतस्यो लुप्तोपमा, आमलकीति लुप्तोपमा, पदार्थहेतुकं काव्यलिङ्गं, तथा परिवेशेन सह मुक्तामालायाः, चन्द्रमण्डलेन तन्मुखस्य, पौर्णमासीनिशया च तन्मूर्त्तेः साहश्यमिति श्रौत्युपमा चेत्येतासामङ्गाङ्गिभावेन सङ्करः।

(ल) अधः इति। अधोमुखं हरस्य शिवस्य शिरसि यत् कपालं नरशिरोऽस्थि तद्वन्मण्डलाकारेण वर्त्तुलाकृतिना, तथा मोक्षस्य यत् पुरं ब्रह्मभवनं तस्य द्वारकलसवत् द्वारस्थापितकुम्भवत् कान्तिर्यस्य तेन तादृशेन स्तनयुगलेनोपलक्षितामित्यर्थः, अतएव एकेन हंसयोर्मिथुनेन युगलेन सनाथा संयुक्ता तां गङ्गामिव स्थिताम्। अत्र लुप्तोपमाद्वयं, पदार्थहेतुकं काव्यलिङ्गं, तथा हंसयुगलेन स्तनयुगलस्य गङ्गया च कन्यायाः साहश्यमिति श्रौत्युपमा चेतासामङ्गाङ्गिभावेन सङ्करः। कपालस्य उन्मुखत्वे तदुपरिभागस्य उच्चावचत्वान्मण्डलाकारो न स्यात्, कपालस्याधोमुखत्वे तु तत्पृष्ठभागस्य दृष्टिगोचरस्य मण्डलाकारः स्यादित्येतत्प्रतिपादनायाधोमुखपदमिति बोध्यम्।

(व) गौरीति। गौरीसिंहस्य दुर्गाया वाहनीभूतसिंहस्य सटामयेनेव जटानिर्म्मितेनेव, चामरवत् रुचिरा आकृतिर्यस्य तेन, तथा स्तनयुगलस्य मध्ये निबद्धो ग्रन्थिर्यस्य तेन, कल्पतरुलतावल्कलेन कृतं उत्तरीयस्य कृत्यं कार्य्यं यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालुप्तोपमयोर्मिथोनिरपेक्षतया संसृष्टिः।

ন্যায়, গ্রথিত গায়ত্রীর অক্ষরের ন্যায়, নারায়ণের নাভিস্থিত শ্বেতপদ্ম হইতে উত্তোলিত বীজের ন্যায় এবং সেই কন্যাটির করস্পর্শে আপনাদিগকে পবিত্র করিতে ইচ্ছা করিয়া নক্ষত্ররূপে আগত সপ্তর্ষিগণের ন্যায় সেই মুক্তাগুলিকে দেখা যাইতেছিল; এবং ঐরূপ মুক্তামালায় কণ্ঠদেশ পরিবেষ্টিত ছিল বলিয়া, পরিবেশদ্বারা চন্দ্রমণ্ডল পরিবেষ্টিত হইলে পূর্ণিমার রাত্রির ন্যায় সেই কন্যাটিকে দেখা যাইতেছিল; (ল) মহাদেবের মস্তকস্থিত অধোমুখ নরমুণ্ডের ন্যায় বর্ত্তুলাকার এবং ব্রহ্মভবনের দ্বারস্থিত কলসদ্বয়ের ন্যায় কান্তি-সম্পন্ন দুইটি স্তন, সেই কন্যাটির বক্ষঃস্থলে বিরাজ করিতেছিল; সুতরাং কেবল দুইটি হংসসংযুক্ত গঙ্গার ন্যায় তাহাকে দেখা যাইতেছিল; (ব) চামরের ন্যায় সুন্দর আকৃতি একখানা কল্পতরুর বল্কল, তাহার স্তনযুগলের মধ্যস্থানে বদ্ধ থাকিয়া তাহার উত্তরীয় বস্ত্রের কার্য্য করিতেছিল;

(१) परिवेष...। (२) पौर्णमासीम्। (३) मोक्षद्वारकलश, मोक्षद्वारनियुक्तकलश...।
(४) एकगतहंस...। (५) श्वेतगङ्गाम्। (६) चीराकृतिना।

कृतोत्तरीयकृत्याम्, ( व ) अयुग्मलोचनसकाशात् प्रसादलब्धेन चूड़ामणि-चन्द्र-मयूख-जालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम्, (१) ( श ) आप्रपदीनेन च स्वभावसितेनापि ब्रह्मासनबन्धोत्तान-चरणतल-प्रभा-परिष्वङ्गा-ल्लोहितायमानेन दुकूलपटेन प्रावृतनितम्बाम्, ( ष ) यौवनेनापि स्वकालोप-सर्पिणा निर्विकार-विनीतेन (२) शिष्येणेवोपास्यमानाम्, ( स ) लावण्येनापि कृतपुण्येनेव स्वच्छात्मना परिगृहीताम्, ( ह ) रूपेणापि रुचिरलोचनेन विगत-

( श ) अयुग्मेति । अयुग्मलोचनस्य त्रिलोचनस्य शिवस्य सकाशात् प्रसादलब्धेन अनुग्रहात् प्राप्तेन, चूड़ामणेः शिवस्यैव चूड़ामणीभूतस्य चन्द्रस्य मयूखजालेनेव किरणकलापेनेव स्थितेन, शुभ्रत्वादिति भावः, मण्डलीकृतेन ब्रह्मसूत्रेण यज्ञोपवीतेन पवित्रीकृतः कायो देहो यस्यास्ताम् । अत्र जात्युत्प्रेक्षालङ्कारः । अस्यास्तु तदा ब्रह्मचारितया यज्ञोपवीतधारणं शास्त्रीयमेव । तथा च हारीतः—"द्विविधाः स्त्रियो ब्रह्म-वादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्षचर्य्या ।" तदेतत् प्रपञ्चितमस्माभिरुत्तररामचरितटीकायामनुसन्धेयम् ।

( ष ) आप्रेति । किञ्च । प्रपदं पादाग्रं मर्य्यादाभूतमित्याप्रपदं तत् प्राप्नोतीत्याप्रपदीनः पादतलपर्य्यन्त-व्यापकः तेन, "स्यान्निष्वाप्रपदीनं तत् प्राप्नोत्याप्रपदं हि यत्" इत्यमरः, स्वभावेन सितो धवलस्तेनापि सता, ब्रह्मासनबन्धेन पद्मासनकरणेन उत्ताने उन्मुखे ये चरणतले तयोः प्रभाया अर्थाल्लोहितायाः परिष्वङ्गात् संसर्गात् लोहितायमानेन दुकूलपटेन सूक्ष्मवसनेन प्रावृतावाच्छादितौ नितम्बौ यस्यास्ताम् । अत्र श्वेतदुकूलस्य लौहित्यगुणग्रहणात्तद्गुणोऽलङ्कारः ।

( स ) यौवनेनेति । अपिः समुच्चये । स्वकाले उपयुक्तवयसि स्वकीयसेवावसरे च उपसर्पति आगच्छ-तीति तेन, तथा निर्विकारं कामविकाररहितं क्रोधादिविकाररहितञ्च यथा स्यात्तथा विनीतेन शिक्षितेन यौवनेन, शिष्येणेव उपास्यमानां आश्रीयमाणां सेव्यमानाञ्च । अत्र पूर्णोपमालङ्कारः ।

( ह ) लावण्येनेति । कृतपुण्येनेव सता स्वच्छात्मना विशदेन काममलहीनस्वरूपेण च लावण्येन परि-गृहीतामाश्रिताम् । अत्र पुण्यकरणोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः ।

সেখানা যেন দুর্গার সিংহের জটাদ্বারা নির্ম্মিত বলিয়া বোধ হইতেছিল। (শ) কণ্ঠদেশে মণ্ডলীকৃত একটি যজ্ঞসূত্রে তাহার দেহ পবিত্র করিয়াছিল; মহাদেবের নিকট হইতে অনুগ্রহে লব্ধ, তাঁহারই চূড়ামণিরূপ চন্দ্রের কিরণসমূহের ন্যায় সেই যজ্ঞসূত্রটি বিরাজ করিতেছিল। (ষ) এবং চরণের অগ্রপর্য্যন্তব্যাপী সূক্ষ্মবস্ত্রে তাহার নিতম্বদেশ আবৃত ছিল; সেই বস্ত্রখানা স্বভাবতই শুক্লবর্ণ হইলেও, সে পদ্মাসন করিয়া বসিয়া থাকায়, উত্তানীকৃত (চিৎ করা) চরণতলের প্রভা তাহাতে পতিত হওয়ায় বস্ত্রখানার সেই অংশটা রক্তবর্ণ হইয়াছিল। (স) অবসরক্রমে উপস্থিত ও ক্রোধাদি-বিকার-বিহীন শিক্ষিত শিষ্যের ন্যায়, উপযুক্ত বয়সে উপস্থিত

(१) पवित्रतरीकृतकायां । (२) निर्विकारेण विनीतेन ।

चापलेन आयतनमृगेणेव निषेविताम्, (१) (क्ष) उत्सङ्गगताञ्च स्वसुतामिव सूक्ष्म-शङ्ख-खण्डिकाङ्गुरीयक-पूरिताङ्गुलिना (२) त्रिपुण्ड्रकावशिष्ट-भस्म-पाण्डु-रेण (३) प्रकोष्ठ-बद्ध-शङ्ख-खण्डकेन नख-मयूख-दन्तुरतया गृहीतदन्तकोणेनेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्व्वविद्याम्, (क) मणिमण्डपिकास्तम्भ-लग्नाभिरात्मानुरूपाभिः सहचरीभिरिव सवीणाभिर्विलास-वतीभिः प्रतिमाभि (४)-रुपेताम्, (ख) स्नपनार्द्र-लिङ्ग-संक्रान्त-प्रतिविम्बतया

(क्ष) रूपेणेति। रुचिरे सुन्दरे लोचने यस्य यत्र च तेन, तथा विगतं चापलं स्वाभाविकचाञ्चल्यं मदनोद्रेकश्च यस्य यत्र च तेन, आयतनमृगेणेव तत्सिद्धायतनहरिणेनेव रूपेण सौन्दर्य्येण निषेवितामाश्रिताम्। अत्रापि पूर्णोपमालङ्कारः।

(क) उत्सङ्गेति। सूक्ष्माणां शङ्खखण्डिकानां शङ्खखण्डानां अङ्गुरीयकैः पूरिता अङ्गुलयो यस्य तेन, त्रिपुण्ड्रकात्तदाख्यतिलककरणादवशिष्टेन भस्मना पाण्डुरेण शुभ्रेण, तथा प्रकोष्ठे मणिबन्धदेशे बद्धो धृतः शङ्खखण्डः शङ्खवलयं यस्य तेन, नखानां मयूखैर्दन्तुरतया तुङ्गतया दीर्घतया हेतुना, गृहीतो दन्तकोणो गजदन्तनिर्म्मितवीणावादनसाधनं येन तादृशेनेव प्रतीयमानेन दक्षिणकरेण, उत्सङ्गगतां क्रोड़स्थितां, दन्तमयीं गजदन्तभूषणप्रचुरां वीणां स्वसुतां निजकन्यामिव आस्फालयन्तीं वादयन्तीं सवात्सल्यमुत्क्षिप्योत्क्षिप्य लालयन्तीञ्च, अतएव प्रत्यक्षां गन्धर्व्वविद्यां गानशास्त्रविद्यामिव विद्यमानाम्। अत्र पूर्णोपमालङ्कारः, तथा दन्तकोणग्रहणोत्प्रेक्षणात् क्रियोत्प्रेक्षा, पदार्थहेतुकं काव्यलिङ्गं, प्रत्यक्षां गन्धर्व्वविद्यामिवेति गुणोत्प्रेक्षा चेत्येतासामङ्गाङ्गिभावेन सङ्करः। शङ्खमयाङ्गुरीयकवलयाभ्यां शावैधव्यं व्यज्यत इति वस्तुना वस्तुध्वनिः। "कोणो वीणादिवादन"मित्यमरः।

(ख) सखीति। विलासवतीभिर्विभ्रमशोभाशालिनीभिः। सहचरीभिरिव स्थिताभिः प्रतिमाभिरात्मप्रतिबिम्बै रुपेताम्। अत्र श्रौतोपमालङ्कारः।

ও কাম-বিকার-বিহীন বশ্য যৌবনকাল তাহাকে আশ্রয় করিয়াছিল। (হ) লাবণ্যও, যেন পুণ্যোপার্জ্জন করিয়াই নির্ম্মল হইয়া তাহাকে অবলম্বন করিয়াছিল। (ক্ষ) সেই সিদ্ধায়তনের হরিণের ন্যায় সুন্দর-নয়ন-সম্পন্ন ও চাঞ্চল্যবিহীন রূপও, তাহাকে আশ্রয় করিয়াছিল। (ক) আর সে, নিজ কন্যার ন্যায় হস্তি-দন্ত-ভূষিত একটি বীণা ক্রোড়ে স্থাপন করিয়া দক্ষিণহস্তদ্বারা বাজাইতেছিল; তাহার সেই দক্ষিণ-হস্তের অঙ্গুলিগুলি ক্ষুদ্র ক্ষুদ্র শঙ্খ-খণ্ডের অঙ্গুরীদ্বারা পরিপূর্ণ ছিল, ত্রিপুণ্ড্র ধারণ করার অবশিষ্ট ভস্মে সেই দক্ষিণ-হস্ত শুভ্রবর্ণ হইয়াছিল, তাহার মণিবন্ধদেশ শঙ্খবলয়ে পরিবেষ্টিত ছিল এবং নখের কিরণে সেই দক্ষিণ হস্ত লম্বা বলিয়া বোধ হওয়ায় হস্তি-দন্তের ছড়ি ধারণ করিয়াছে বলিয়া বোধ হইতেছিল; ইহাতে তাহাকে সাক্ষাৎ গন্ধর্ব্ববিদ্যার ন্যায় দেখা যাইতেছিল। (খ) মণ্ডপের মণিময় স্তম্ভগুলিতে লীলাবিলাস-সংযুক্ত, বীণার

(१) सेविता। (२) सूक्ष्मदन्तखण्डिकाङ्गुलीयकापूरिताङ्गुलिना। (३)...पाण्डरेण।
(४) सवीणाभिः प्रतिमाभिः।

अतिप्रबलभक्त्याराधितस्य हृदयमिव प्रविष्टां हरस्य, (ग) हारलतयेव (१) प्राप्तकण्ठयोगया ग्रहपङ्क्त्येव ध्रुवप्रतिबद्धया क्रुद्धयेव रक्त-(२) मुखवर्णया मत्तयेव घूर्णित-मन्द-(३) तारया उन्मत्तयेव अनेककृततालया मीमांसयेव अनेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, (घ) अतिमधुरगीतावकृष्टे-

(ग) स्नपनेति। स्नपनेन आर्द्रे क्लिन्ने लिङ्गे शिवमूर्त्तौ संक्रान्तं प्रतिबिम्बं यस्यास्तस्या भावस्तया हेतुना, अतिप्रबलभक्त्या आराधितस्य हरस्य हृदयं प्रविष्टामिव स्थिताम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(घ) हारेति। हारलतयेव प्राप्तकण्ठयोगया लब्धगलसम्बन्धया, इदमुभयत्रापि समानं। ग्रहाणां रव्यादीनां पङ्क्त्या श्रेण्येव, ध्रुवेण गानाङ्गविशेषेण प्रतिबद्धया नियमितया अन्यत्र तु ध्रुवाभ्यां तदाख्यनक्षत्राभ्यां प्रतिबद्धया संयतया। गानाङ्गध्रुवलक्षणमुक्तं सङ्गीतदामोदरे—"उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चमः स्मृतः। कनिष्ठश्च चतुर्भिः स्याद् ध्रुवकोऽयं मयोदितः।" इत्यादि। ग्रहचक्रस्य ध्रुवनक्षत्रयोर्बन्धनमुक्तं सूर्य्यसिद्धान्ते—"भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्।" क्रुद्धया स्त्रियेव, रक्ताः श्रीरागादियुक्ता मुखवर्णा मुखोच्चारिताक्षराणि यस्यां तया, अन्यत्र तु रक्तौ लोहितौ मुखवर्णौ यस्यास्तया। मत्तया मद्यादिपानजनितमदया स्त्रियेव, घूर्णितौ मन्द्रपिकामध्ये विचरितः मन्द्रो मृदुः तार उच्चश्च स्वरो यस्यास्तया, अन्यत्र तु घूर्णिते मदवशाच्चलिते मन्दे अलसे तारे कनीनिकाद्वयं यस्यास्तया। उन्मत्तया स्त्रियेव, अनेके कृतास्ताला: कालक्रियामानरूपाः करतलध्वनयश्च यस्यां यया च तया। मीमांसया जैमिनिप्रणीतपूर्वमीमांसाशास्त्रेणेव, अनेकाभिर्विविधाभिर्भावनाभिर्मूर्च्छनाभिः अनुविद्धया विशिष्टया, पक्षे अनेकया द्विविधया भावनया भावयितुर्व्यापारेण तन्निरूपणेनेत्यर्थः अनुविद्धया ग्रथितया। "भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः, सा च द्विविधा शाब्दी भावना आर्थी भावना चे"ति लौगाक्षिभास्करः। विस्तरस्तु तत्रैव द्रष्टव्यः। एवम्भूतया गीत्या गानेन, विरूपाणि चन्द्रसूर्य्याग्निरूपतया विसदृशानि अक्षीणि नेत्राणि यस्य तं देवं शिवं उपवीणयन्तीं वीणया उपगायन्तीम्। अत्र पूर्णा मालोपमालङ्कारः।

সহিত তাহার দেহের অনুরূপ প্রতিবিম্ব পড়িয়াছিল ; সেগুলিকে তাহার সহচরীদিগের ন্যায় দেখা যাইতেছিল। (গ) স্নান করাইয়াছিল বলিয়া আর্দ্র শিব-মূর্ত্তিতে তাহার প্রতিবিম্ব পড়িয়াছিল, সুতরাং বোধ হইতেছিল যেন, বিশেষ ভক্তিসহকারে আরাধনা করায় সে, শিবের হৃদয়ে প্রবেশ করিয়াছে। (ঘ) বীণার ধ্বনির সহিত গান মিশাইয়া সে, মহাদেবের স্তব করিতেছিল ; সেই গানটি মুক্তাময় হারের ন্যায় তাহার কণ্ঠ-সংলগ্ন ছিল, গ্রহচক্র যেমন ধ্রুবনক্ষত্র-সংযুক্ত থাকে, সেই গানটিও তেমন ধুয়া-সংযুক্ত ছিল এবং ক্রুদ্ধা রমণীর যেমন মুখ রক্তবর্ণ হয়, সেই গানটিতেও তেমন মুখ হইতে নানাবিধ রাগ-রাগিণীযুক্ত অক্ষর উচ্চারিত হইতেছিল ; মত্তা রমণীর যেমন নয়নের তারা অলস হইয়া ঘুরিতে থাকে, সেই গানের স্বরও তেমন মৃদু ও উচ্চ হইয়া ঘুরিতেছিল ; উন্মত্ত রমণী যেমন বহুতর করতলধ্বনি করে, সেই গানেও তেমন বহুতর তাল করা হইতেছিল এবং মীমাংসাদর্শন যেমন শাব্দী ও আর্থী নামে দ্বিবিধ ভাবনা-বিশিষ্ট,

(१) हारलेखयेव। (२) रागरक्त...। (३)...मन्द्र...।

ध्यानमिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृग-वराह-वानर-वारण-शरभ-सिंह-प्रभृतिभिर्वनचरैराबद्धमण्डलैराकर्ण्यमान-गीतानुविद्ध-विपञ्ची-घोषाम्, (१) (ङ) अमरापगामिव नभसोऽवतीर्णाम्, (च) दीक्षितवाचमिवाप्राकृताम्, (छ) त्रिपुरारिशरशलाकामिव तेजोमयीम्, (२) (ज) पीतामृतामिव विगत-तृष्णाम्, (झ) ईशानशिरःशशिकलामिवानुपजातरागाम्, (ञ) अमथितोदधिजलसम्पद-

---

(ङ) ध्यतीति। अतिमधुरेण गीतेन अवकृष्टैराकृष्य आनीतैः, निश्चलकर्णपुटैः, अतएव ध्यानं अभ्यस्यद्भिः शिक्षमाणैरिव स्थितैः, आबद्धं मण्डलं वर्तुलाकारेणावस्थानं येषैः। वारणो हस्ती। शरभः सिंहघाती अष्टपादो जन्तुविशेषः। आकर्ण्यमानः श्रूयमाणः गीतानुविद्धो गानानुसृतो विपञ्चीघोषः सप्ततन्त्रीविशिष्टवीणाध्वनिर्यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(च) अमरेति। नभस आकाशादवतीर्णां अमरापगां मन्दाकिनीमिव स्थिताम्। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(छ) दीक्षितेति। दीक्षितस्य यज्ञादौ व्रतिनः वाचं वाक्यमिव, अप्राकृतां अमानुषीं दिव्याम्, अन्यत्र तु प्राकृतादिभाषाभिन्नां संस्कृतात्मिकामित्यर्थः। "नापभाषित वै न म्लेच्छित वै" इति श्रुत्या व्रतिनोऽपभ्रंशभाषाव्यवहारनिषेधादिति भावः। अत्र पूर्णोपमालङ्कारः।

(ज) त्रिपुरेति। त्रिपुरारेः शिवस्य शरशलाका त्रिपुरासुरवधकाले नारायणात्मिका बाणशलाकामिव तेजोमयीं तेजःप्रचुराम्। पूर्णोपमा।

(झ) पीतेति। पीतममृतं यया तां स्त्रियमिव, विगता तृष्णा विषयलोभो जलपिपासा च यस्यास्ताम्। पूर्णोपमा।

(ञ) ईशानेति। ईशानस्य शिवस्य शिरसः शशिकलामिव, अनुपजातो रागः कामानुरागो रक्तिमा च यस्यास्ताम्। पूर्णोपमा। तच्चन्द्रकलाया उदयास्ताभावादेव रागो न जायत इति बोध्यम्।

---

সেই গানটিও তেমন বহুতর মূর্চ্ছনা-বিশিষ্ট ছিল। (ঙ) অতি মধুর গানে আকৃষ্ট হইয়া হরিণ, শূকর, বানর, হস্তী, শরভ ও সিংহপ্রভৃতি বন্য পশুগণ নিশ্চল কর্ণপুটে ও মণ্ডলাকারে অবস্থান করিয়া, তাহার গীত-সংযুক্ত বীণার ধ্বনি শুনিতেছিল ; তাহাতে বোধ হইতেছিল যেন তাহারাও ধ্যান অভ্যাস করিতেছে। (চ) আর সেই কন্যাটিকে, আকাশ হইতে অবতীর্ণ মন্দাকিনীর ন্যায় দেখা যাইতেছিল। (ছ) যজ্ঞে দীক্ষিত ব্যক্তির যেমন প্রাকৃত ভাষা বলিতে নাই, সেই কন্যাটিও তেমন প্রাকৃত ( মনুষ্য ) ছিল না। (জ) ত্রিপুরাসুরের বধের সময়ে শিবের বাণের ন্যায় সেও তেজোময়ী ছিল। (ঝ) অমৃতপানকারিণীর যেমন পিপাসা থাকে না, তাহারও তেমন বিষয়-লালসা ছিল না। (ঞ) শিবের মস্তকস্থিত চন্দ্রকলার যেমন রাগ ( রক্তিমা ) জন্মে না, তাহারও তেমন রাগ ( কামানুরাগ ) জন্মিয়াছিল না। (ট)

---

(१)...निर्घोषाम्। (२) तपोमयीम्।

मिवान्तःप्रसन्नाम्, (ट) असमस्तपदवृत्तिमिवाद्वन्द्वाम्, (ठ) बौद्धबुद्धिमिव निरालम्बनाम्, (ड) वैदेहीमिव प्राप्तज्योतिःप्रवेशाम्, (ढ) द्यूतकलाकुशला-मिव वशीकृताक्षहृदयाम्, (ण) महीमिव जलभृतदेहाम्, (त) हिमसमय-दिवस-(१) मुखलक्ष्मीमिव परिगृहीत-(२) भास्करातपाम्, (थ) आर्य्यामिव

---

(ट) अमथितेति। अमथितस्य उदधेः समुद्रस्य जलसम्पदमिव, अन्तःप्रसन्नां चित्ते शुद्धां कामादि-रहितचित्तामित्यर्थः, अन्यत्र तु अभ्यन्तरनिर्म्मलाम्। पूर्णोपमा।

(ठ) असमस्तेति। असमस्तानां समासरहितानां पदानां सुबन्तरूपाणां वृत्तिमवस्थितिमिव, अद्वन्द्वां वर्षा-तपशीतोष्णादिद्वन्द्वदुःखरहितां, अन्यत्र तु द्वन्द्वाख्यसमासरहितां युग्ममिलनरहितां वा। पूर्णोपमा।

(ड) बौद्धेति। बौद्धानां माध्यमिकयोगाचारसाम्प्रदायिकानामित्यर्थः बुद्धिं ज्ञानमिव, निरालम्बनां सर्वत्रैवासक्तिरहितां, अन्यत्र तु निर्विषयाम्। पूर्णोपमा। बौद्धानां माध्यमिका योगाचाराश्च सम्प्रदाया विज्ञानातिरिक्तं पदार्थं न मन्यन्ते, वदन्ति च तत्तज्ज्ञानमेव घटादिरूपेणावभासते, भेदस्तु भ्रान्तिरेवेति। तथा च "सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये।"

(ढ) वैदेहीमिति। वैदेहीं सीतामिव, प्राप्तो ज्योतिषि परब्रह्मणि प्रवेशो ध्यानगोचरता यया ताम्, अन्यत्र तु प्राप्तो ज्योतिषि परीक्षार्थप्रज्वालितवह्नौ प्रवेशो यया ताम्। पूर्णोपमा।

(ण) द्यूतेति। द्यूतकलायां पाशकक्रीडायां कुशलां निपुणां स्त्रियमिव, वशीकृतानि अक्षाणि इन्द्रियाणि हृदयं चित्तञ्च यया ताम्, अन्यत्र तु वशीकृतं अक्षहृदयं पाशकविद्यारहस्यं यया ताम्। पूर्णोपमा।

(त) महीमिति। महीं पृथिवीमिव, जलेन जलमात्रपानेन भृतो धृतो देहो यया ताम्, अन्यत्र तु जलेन भृतो वेष्टितो देहो यस्यास्ताम्। पूर्णोपमा।

(थ) हिमेति। हिमसमयस्य माघफाल्गुनात्मकतुषारपातकालस्य दिवसमुखलक्ष्मीमिव प्रत्यूषश्रियमिव, परिगृहीतः पञ्चाग्निसाधनात् शरीरे स्वीकृतः भास्करातपः सूर्य्यालोको यया ताम्, अन्यत्र तु परिगृहीत-तुषारैर्निरुद्धो भास्करातपो यया ताम्। पूर्णोपमा।

---

অনালোড়িত সমুদ্রের জলের ভিতর যেমন নির্ম্মল, তাহার অন্তঃকরণও তেমন নির্ম্মল ছিল। (ঠ) সমাসবিহীন পদসমূহের যেমন পরস্পর মিলন থাকে না, তাহারও তেমন শীতোষ্ণাদি দ্বন্দ্বদুঃখ ছিল না। (ড) বৌদ্ধদিগের সম্প্রদায়বিশেষের মতে জ্ঞানের যেমন বিষয় নাই, তাহারও তেমন আসক্তি ছিল না। (ঢ) সীতা যেমন অগ্নিতে প্রবেশ করিয়াছিলেন, সেও তেমন পরব্রহ্মে প্রবেশ করিয়াছিল। (ণ) দ্যূতক্রীড়ায় নিপুণ স্ত্রীলোক যেমন পাশক-বিদ্যার রহস্য আয়ত্ত করিয়া থাকে, সেও তেমন ইন্দ্রিয়সমূহ এবং চিত্তকে আয়ত্ত করিয়াছিল। (ত) পৃথিবী যেমন জলে পরিবেষ্টিতদেহা, সেও তেমন কেবল জলপানে ধৃতদেহা ছিল। (থ) শীতকালের প্রভাতসময়ের শোভা যেমন হিমদ্বারা সূর্য্যের আলোক আবৃত করে, সেও

---

(১)...দিন...। (২) পরিপীত...।

समुपात्त-(१) यतिगणोचितमात्राम्, (द) आलिखितामिवाचलावस्थानाम्, (ध) अंशुमयीमिव तनुच्छायानुलिप्तभूतलाम्, (न) निर्म्ममाम्, (२) निरहङ्काराम्, निर्म्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमान-वयः-परिमाणां (३) अष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श। (प)

ततोऽवतीर्य्य तरुशाखायां बद्ध्वा तुरङ्गं (४) उपसृत्य भगवते भक्त्या (५) प्रणम्य

---

(द) आर्य्यामिति। आर्य्या स्वनामप्रसिद्धं छन्दोविशेषमिव, समुपात्ता गृहीता यतिगणस्य जितेन्द्रियजनसमूहस्य मुनिगणस्येत्यर्थः उचिता योग्या मात्रा दण्डकमण्डल्वाद्युपकरणं यया ताम्, अन्यत्र तु समुपात्ता गृहीताः, यतिर्जिह्वाविश्रामस्थानं, गणा मगणनगणादयः, उचिता योग्या तत्तल्लक्षणोक्ता मात्रा उच्चारणकालश्च यया ताम्। पूर्णोपमा। "लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः। षष्ठो जश्च न लघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः।" इत्यादिच्छन्दोमञ्जरी।

(ध) आलीति। आलिखितां चित्रितामिव, अचलं पर्व्वते अवस्थानं यस्यास्ताम्, अन्यत्र तु अचलं स्थिरमवस्थानं यस्यास्ताम्। पूर्णोपमा।

(न) अंश्विति। अंशुमयीं तेजोमयीं देवीमिव, तनुच्छायया देहस्य प्रतिबिम्बेन कान्त्या च अनुलिप्तं भूतलं यया ताम्। पूर्णोपमा।

(प) निर्म्ममामिति। ममतार्थे ममशब्दोऽयमव्ययः, निर्म्ममां ममतारहिताम्। निर्म्मत्सरामन्यविद्वेषहीनाम्। दिव्यत्वात् गन्धर्व्वकन्यात्वेन निर्जरत्वादित्यर्थः अपरिज्ञायमानं मानुषवदाकृतिदर्शनमात्रेणावुध्यमानं वयसः परिमाणं यस्यास्तामपि. अष्टादशवर्षदेशीयामिव अष्टादशवर्षात् किञ्चिन्न्यूनवयस्कामिव। "ईषदसमाप्ता"वित्यादिना देशीयप्रत्ययः। प्रतिपन्नं गृहीतं पशुपतिः शिवो देवता अस्येति पाशुपतं व्रतं शिवपूजारूपो नियमो यया ताम्।

(फ) तत इति। त्रिलोचनाय शिवाय। दिव्ययोषितं स्वर्गीयस्त्रियम्। अनिमिषाणि निस्पन्दानि पक्ष्माणि लोमानि यस्य तेन, निश्चलं यथा तथा निबद्धं कृतं लक्ष्यं दृष्टिर्येन तेन।

---

তেমন শরীরে সূর্য্যের আলোক ধারণ করিতেছিল। (দ) আর্য্যা ছন্দের যেমন যতি, গণ ও উপযুক্ত মাত্রা থাকে, তাহারও তেমন মুনিগণের উপযুক্ত দণ্ড ও কমণ্ডলু প্রভৃতি উপকরণ ছিল। (ধ) চিত্রিত প্রতিমূর্ত্তি যেমন নিশ্চলভাবে অবস্থান করে, সেও তেমন পর্ব্বতে অবস্থান করিতেছিল। (ন) তেজোময়ী দেবী যেমন শরীরের কান্তিদ্বারা ভূতল লিপ্ত করেন, সেও তেমন শরীরের প্রতিবিম্বদ্বারা ভূতল লিপ্ত করিতেছিল। (প) এবং তাহার মমতা ছিল না, অহঙ্কার ছিল না, বিদ্বেষ ছিল না, ছিল,—অমানুষী আকৃতি ; আর স্বর্গীয় বলিয়া তাহার বয়সের যথার্থ পরিমাণ জানিতে না পারিলেও, তাহাকে অষ্টাদশ বর্ষের কিঞ্চিৎ ন্যূনবয়স্ক বলিয়া বোধ হইতেছিল এবং সে, শিবের উপাসনারূপ ব্রত অবলম্বন করিয়াছিল।

(ফ) তদনন্তর চন্দ্রাপীড় অশ্ব হইতে অবতরণ করিয়া কোন বৃক্ষের শাখাতে, অশ্বটিকে

---

(১) উপাত্ত...। (২) নির্ম্মলাং। (৩)···প্রমাণাং। (৪) তুরগং। (৫) মহাভক্ত্যা।

त्रिलोचनाय, (१) तामेव दिव्ययोषितमनिमिष-(२) पक्ष्मणा निश्चल-निबद्ध-लक्ष्येण चक्षुषा पुनर्निरूपयामास (फ)। उदपादि चास्य तस्या रूपसम्पदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि, (ब)—'अहो! जगति जन्तूनाम-समर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि (भ)। तथाहि, मया मृगयायां यदृ-च्छया निरर्थकमनुबध्नता तुरङ्गमुख-(३)मिथुनं, अयमतिमनोहरो मानवानामगम्यो दिव्यजनसञ्चरणोचितः प्रदेशो वीक्षितः (४) (म)। अत्र च सलिलमन्वेष-माणेन हृदयहारि सिद्धजनोपस्पृष्टजलं (५) सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेय-मालोकिता (य)। नहि मे संशीतिरस्या दिव्यतां प्रति, आकृतिरेवानुमा-

(ब) उदपादीति। विस्मय इति चार्थः। रूपसम्पदा सौन्दर्यातिशयेन, कान्त्या देहद्युत्या, प्रशान्त्या प्रशमेन च करणेन, आविर्भूतो विस्मयो यस्य तस्य, अस्य चन्द्रापीडस्य मनसि उदपादि। अयं हृतिस्तत्परा।

(भ) कासौ वृत्तिरित्याह अहो इति। जन्तूनां प्राणिनां, वृत्तान्तान्तराणि व्यापारविशेषाः, असमर्थितोपनतानि अतर्कितोपस्थितानि सन्ति आपतन्ति मनसि आगच्छन्ति अनुभवविषयीभवन्तीत्यर्थः।

(म) उक्तमर्थं समर्थयितुमाह तथाहीति। यदृच्छया स्वेच्छया। अनुबध्नता अनुसरता। तुरङ्ग-मुखमिथुनं किन्नरद्वयं। दिव्यजनसञ्चरणोचितो देवजनविचरणयोग्यः।

(य) अत्रेति। हृदयहारि मनोहरं, सिद्धजनैर्देवयोनिविशेषैः उपस्पृष्टं व्यवहृतं जलं यस्य तत्, सरः अच्छोदसरोवरः। तस्य अच्छोदस्य तीरलेखायां तटवीथ्यां विश्रान्तेन कृतविश्रामेण मयेति सम्बन्धः।

(र) ननु कथमियं दिव्यकन्यकेति निश्चीयत इत्याह नहीति। अस्या दृश्यमानायाः कन्यकायाः,

বন্দন করিলেন, পরে নিকটে যাইয়া ভক্তিসহকারে ভগবান্ মহাদেবকে নমস্কার করিয়া পুনরায় স্থিরদৃষ্টিতে সেই স্বর্গীয় রমণীকেই দেখিতে লাগিলেন; তখন তাঁহার নয়নের লোমগুলি নিস্পন্দ হইয়াছিল। (ব) তাঁহার অলৌকিক সৌন্দর্য্যে, শরীরের আলোকে এবং শান্তির পথ অবলম্বন করায় চন্দ্রাপীড়ের বিস্ময় জন্মিল এবং মনে হইতে লাগিল—(ভ) "কি আশ্চর্য্য! জগতে প্রাণিগণের সমক্ষে বিশেষ বিশেষ ঘটনা, অতর্কিতভাবেই উপস্থিত হইয়া থাকে। (ম) কারণ—আমি ইচ্ছানুসারে মৃগয়ায় আসিলাম, অনর্থক কিন্নর দুইটার অনুসরণ করিলাম, পরে, মানুষের অগম্য, স্বর্গবাসীদিগের বিচরণের যোগ্য, অত্যন্ত মনোহর এই স্থানটি দেখিতে পাইলাম। (য) এখানে আবার জলের অন্বেষণ করিতে করিতে সিদ্ধজন-সেবিত সুন্দর সরোবরটি দেখিলাম; তাহার তীরে আবার বিশ্রাম করিতে থাকিয়া অলৌকিক গান শুনিলাম; আবার সেই গীতধ্বনির অনুসরণ করিয়া এই স্বর্গীয় কন্যাটিকে দেখিতে পাইলাম;

(१) पार्वतीपतये। (२) अनिमिष...।

(३) तुरगमुख...। (४) वीक्षितः स्थितः। (५)...उपस्पृष्टजलं।

पयत्यमानुषताम्, कुतश्च मर्त्यलोके सम्भूतिरेवंविधानां गन्धर्व-(१) ध्वनिविशेषाणाम् ( र )। तद्यदि मे सहसा दर्शनपथान्नापयाति, नारोहति वा कैलासशिखरम्, नोत्पतति वा गगनतलम्, ततः 'का त्वम्, किमभिधाना वा, किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतम्, (२) इति सर्वमेवैतत् एनामुपसृत्य पृच्छामि, अतिमहानयमवकाश आश्चर्याणाम्।' इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ। ( ल )

अथ गीतावसाने मूकीभूतवीणा प्रशान्तमधुकररुतेव कुमुदिनी सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया तपःप्रभाव-

---

दिव्यतां प्रति स्वर्गीयताविषये नहि मे संशीतिः संशयो वर्त्तते। आकृतिरेव अमानुषीति शेषः। अमानुषतां दिव्यताम्। न खलु मानुषीणामेवमाकृतिर्भवतीति भावः। सम्भूतिरुत्पत्तिः। सुतरामस्या दिव्यतां प्रति नहि संशीतिरिति भावः। संशीतिरिति संपूर्वशीङ्धातोः क्तिः।

( ल ) तदिति। नापयाति नापसरति। नोत्पतति नोद्गच्छति। ततस्तदा। किमभिधाना किन्नाम्नी। प्रतिपन्ना आरब्धवती। आश्चर्याणां श्रवणेनाश्चर्यानुभवानां, अयमवकाशः समयः।

( व ) अथेति। मूकीभूता निःशब्दा जाता वीणा यस्याः सा, अतएव प्रशान्तं विरतं मधुकररुतं भ्रमरध्वनिर्यस्याः सा, कुमुदिनीव विद्यमाना। अत्रोपमालङ्कारः। प्रदक्षिणीकृत्य शिवमूर्त्तिमिति शेषः। कृतो

---

কিন্তু ইহার দর্শন পাওয়া মানুষের পক্ষে দুর্লভ। ( র ) এ যে স্বর্গীয়, সে বিষয়ে আমার কোনই সংশয় নাই ; কারণ—ইহার এই আকৃতিই, 'এ মানবী নহে' বলিয়া আমাকে অনুমান করাইতেছে ; বিশেষতঃ মর্ত্ত্যলোকে এইরূপ গন্ধর্ব্বের গীতধ্বনির সম্ভব হইবে কিরূপে ? ( ল ) অতএব যদি সহসাই আমার দৃষ্টিপথ হইতে সরিয়া না যায়, কিংবা কৈলাসপর্ব্বতের শৃঙ্গে আরোহণ না করে, অথবা আকাশে উঠিয়া না যায়, তাহা হইলে 'তুমি কে ? তোমার নামই বা কি ? কি জন্যই বা এই নবীন বয়সে তপস্যা আরম্ভ করিয়াছ ?' এই ভাবে এই সমস্ত বিষয়ই নিকটবর্ত্তী হইয়া ইহাকে জিজ্ঞাসা করিব ; কারণ—আশ্চর্য্য শুনিবার এই-ই অত্যন্ত উপযুক্ত অবসর।' চন্দ্রাপীড় এইরূপ মনে মনে স্থির করিয়া সেই স্ফটিকমণ্ডপের ভিতরেই কোন একটি স্তম্ভ অবলম্বন পূর্ব্বক উপবেশন করিয়া গান-সমাপ্তির অবসর প্রতীক্ষা করতঃ অবস্থান করিতে লাগিলেন।

( ব ) তাহার পর গান সমাপ্ত হইলে বীণাটিও নীরব হইল, তখন ভ্রমরের রব বিরত হইলে কুমুদিনীর ন্যায় সে বিরাজ করিতে লাগিল ; পরে সেই কন্যাটি উঠিয়া

---

(१) गान्धर्व...। (२) पाशुपतव्रतम्।

प्रगल्भया दृष्ट्या समाश्वासयन्तीव, पुण्यैरिव स्पृशन्ती तीर्थजलैरिव प्रक्षालयन्ती, तपोभिरिव पावयन्ती, शुद्धिमिव कुर्वाणा, वरदानं (१) इवोपपादयन्ती पवित्रतामिव (२) नयन्ती चन्द्रापीडमाबभाषे (व)। "स्वागतमतिथये, कथमिमां भूमिमनुप्राप्तो महाभागः, (३) तदुत्तिष्ठ, आगम्यताम्, (४) अनुभूयतामतिथिसत्कारः" इति (श)। एवमुक्तस्तु तया सम्भाषण-(५) मात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय (६) भक्त्या कृतप्रणामो "भगवति! यथाज्ञापयसि" इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज। (ष)

व्रजंश्च समर्थयामास—"हन्त! तावन्नेयं मां दृष्ट्वा तिरोभूता (७)। कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्। यथा चेयमस्यास्तपस्विजनदुर्लभदिव्य-

---

हराय शिवाय प्रणामो यया सा। तपःप्रभावेण प्रगल्भा धृष्टा भावनिर्णयनिपुणेत्यर्थः तया। समाश्वासयन्तीव सान्त्वनां कुर्वतीव अभयं ददतीवेत्यर्थः। शुद्धिं पापक्षयं। उपपादयन्ती सम्पादयन्ती कुर्वती। नयन्ती प्रापयन्ती। अत्र सप्तानामेव क्रियोत्प्रेक्षाणां परस्परनिरपेक्षतया संसृष्टिः।

(श) स्वागतमिति। महान् भागो भाग्यं यस्य सः। अनुप्राप्त आगतः।

(ष) एवमिति। तया कन्यकया एवमुक्तस्तु चन्द्रापीड इति सम्बन्धः। शिष्य इव दर्शितविनयः सन्। अनुवव्राज अनुजगाम। अत्र पूर्णोपमालङ्कारः।

(स) व्रजन्निति। किञ्च, व्रजन् तां कन्यकामनुगच्छन् चन्द्रापीडः, समर्थयामास मनसि निर्द्धारयामास। किं समर्थयामासेत्याह हन्तेति। हन्त हर्षे। इयं कन्या। हि तस्मादेव, मे मम हृदि कुतूहलेन

---

প্রদক্ষিণ করিয়া মহাদেবকে নমস্কার করিল এবং ফিরিয়া, স্বভাবতই ধবলবর্ণ এবং তপস্যার প্রভাবে সর্ব্ব-বিষয়-নির্ণয়-নিপুণ দৃষ্টিদ্বারা চন্দ্রাপীড়কে যেন আশ্বস্ত করিতেছিল, পুণ্যদ্বারাই যেন স্পর্শ করিতেছিল, তীর্থজলেই যেন প্রক্ষালন করিতেছিল, তপস্যাতেই যেন পবিত্র করিতেছিল, যেন পাপক্ষয় জন্মাইতেছিল, যেন বর-দান করিতেছিল এবং যেন পবিত্রতা জন্মাইতেছিল—এই অবস্থায় বলিল। (শ) "অতিথির শুভাগমন ত? কি করিয়া মহাশয় এখানে আসিলেন? অতএব উঠুন, আসুন, আমার অতিথিসৎকার গ্রহণ করুন।" (ষ) সে, এইরূপ বলিলে চন্দ্রাপীড় সেই সম্ভাষণমাত্রেই আপনাকে অনুগৃহীত মনে করিয়া, উঠিয়া ভক্তিসহকারে তাহাকে প্রণাম করিয়া "দেবি! আপনি যেরূপ আদেশ করেন, (তাহাই করিব)" এই কথা বলিয়া শিষ্যের ন্যায় বিনয়-প্রদর্শনপূর্ব্বক তাহার পশ্চাৎ পশ্চাৎ চলিলেন; সেও চলিল।

(স) চন্দ্রাপীড় যাইবার সময়ে মনে মনে এইরূপ স্থির করিলেন যে,—'ভাল! এ, ত

---

(१) वरप्रदानं। (२) पवित्रिताम्। (३) महाभाग! (४) अनुगम्यतां।
(५) सम्भावित...। (६) समुत्थाय। (७) अद्भुताकृतिस्तिरोभूता।

रूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते, तथा सम्भावयामि नियतमियमखिलमात्मोदन्तं (१) अभ्यर्थ्यमाना कथयिष्यतीति (घ)। एवञ्च कृतमतिः पदशतमात्रमिव गत्वा, निरन्तरैर्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागाम्, (ङ) उत्फुल्लकुसुमेषु लतानिकुञ्जेषु कूजतां मन्दं मन्दं मदमत्त-(२) मधुलिहां विरुतिभिर्मुखरीकृतपर्य्यन्ताम्, (च) अतिदूरपातिनीनाञ्च धवलशिलातल-प्रतिघातोत्पतनफेनिलानामपां प्रस्रवणैरुत्-

---

प्रश्नाशया पूर्व्वोक्तरूपजिज्ञासाशंसया पदं प्रतिष्ठा कृतम्। तपस्विजनानां दुर्लभं दिव्यं रूपं यस्यास्तस्या अपि, अस्याः कन्यकायाः, यथा इयं, दाक्षिण्यस्य औदार्य्यस्य अतिशयोऽतिरेको यस्यां सा तादृशी, प्रतिपत्तिः स्वागतमयितयि इत्यादिव्यवहारः, अभिजाता उत्पन्ना विभाव्यते लक्ष्यते। अभ्यर्थ्यमाना मया वक्तुमनुरुध्यमाना सती, नियतं निश्चितं। आत्मोदन्तं स्वकीयवृत्तान्तं। इति सम्भावयामीत्यन्वयः।

(ङ) एवमिति। किञ्च, एवं कृतमतिः इत्थं कृतनिश्चयश्चन्द्रापीडः, पदशतमात्रमिव गत्वा गुहामद्राक्षीदिति वक्ष्यमाणक्रिययान्वयः। अत स्त्रियां द्वितीयैकवचनान्तपदानि गुहामिति वक्ष्यमाणस्य विशेषणानि। निरन्तरैर्घनैः, अतएव दिवापि रजनीसमयं दर्शयद्भिरिव स्थितैः, तमालतरुभिः करणैः, अन्धकारितः सञ्जातान्धकारः पुरोभागः सम्मुखदेशो यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(च) उत्फुल्लेति। उत्फुल्लानि विकसितानि कुसुमानि येषु तेषु। मदमत्ता ये मधुलिहो भ्रमरास्तेषां विरुतिभिर्झङ्कारैः मुखरीकृतः शब्दितः पर्य्यन्तः प्रान्तभागो यस्यास्ताम्।

(छ) अतीति। किञ्च, अतिदूरात् पतितुं शीलं यासां तासां, धवलेषु शिलातलेषु प्रतिघातेन यदुत्पतनमूर्द्ध्वगमनं तेन फेनिलानां फेनवतीनां अपां जलानां, उत्कोटय उन्नताग्रा ये ग्रावाणः पाषाणास्तेषां विटङ्कपरिभागैः विपाट्यमानानि विच्छिद्यमानानि तैः, उच्चरन्तो घातप्रतिघातैरुत्पद्यमानाः ध्वनयः शब्दा

---

আমাকে দেখিয়া অন্তর্হিত হইল না; সুতরাং এখন আমার চিত্তে কৌতুকবশতঃ সেই প্রশ্ন করিবার আশা প্রতিষ্ঠা লাভ করিল। ইহার এই দিব্য রূপ, তপস্বিদিগেরও দুর্ল্লভ; তথাপি আমার প্রতি ইহার যখন এইরূপ অত্যন্ত-ঔদার্য্য-সম্পন্ন ব্যবহার জন্মিয়াছে—দেখিতেছি, তখন আমি ইহা স্থির করিতে পারি যে,—আমি ইহাকে বলিবার জন্য অনুরোধ করিলে, এ, নিশ্চয়ই আপনার সমস্ত বৃত্তান্ত বলিবে।' (ঙ) চন্দ্রাপীড় মনে মনে এইরূপ কৃতনিশ্চয় হইয়া, এক-শত-পদ-মাত্র গমন করিয়া একটি গুহা দেখিতে পাইলেন, তাহার সম্মুখভাগ, কতকগুলি তমালবৃক্ষে অন্ধকার করিয়া রাখিয়াছিল; সেই তমালবৃক্ষগুলি, অত্যন্ত ঘন ছিল বলিয়া দিনের বেলায়ও যেন রাত্রিকাল বলিয়া ভ্রম জন্মাইতেছিল; (চ) লতাকুঞ্জের ভিতরে নানাবিধ ফুল ফুটিয়াছিল, তাহাতে মন্দ-মন্দ-রবকারী মদমত্ত ভ্রমরগণের ঝঙ্কারে সেই গুহাটির প্রান্তভাগ মুখরিত হইয়াছিল। (ছ) পার্ব্বত্য নির্ঝরের জল অতিদূর হইতে ধবল

---

(१) इयमात्मोदन्तं। (२) गुञ्जतां मन्दं, मधुमत्त…।

कोटि-ग्राव-विटङ्क--विपात्यमानैरुच्चरद्भिरवशीर्य्यमाणा-तुषार--शिशिर--शीकरा-सारैरावध्यमाननीहाराम्, (क) हिम-हार-हर-हास-धवलैरुभयतः चरद्भि-र्निर्झरैर्द्वारावलम्बित-चलच्चामर-(१) कलापामिवोपलक्ष्यमाणाम्, (ख) अन्तः-स्थापित-मणि-कमण्डलु-मण्डलाम्, (ग) एकान्तावलम्बित-योग-पट्टिकाम्, (घ) विशाखिका-शिखर-निबद्ध-(२) नारिकेली-(३) फल-वल्कलमय-धौतोपानद्युगलो-

---

येषु तैः, तथा अवशीर्य्यमाणाः पाषाणेषु पतनात् जर्ज्जरीभवन्तः तुषारवत् शिशिराः हिमवत् शीतलाः शीकरा-सारा जलविन्दुधारा येषां तैः, प्रस्रवणैः पार्व्वत्यनिर्झरैः, आवध्यमाना उत्पाद्यमाना नीहारा हिमवज्जल-विन्दवो यस्यां ताम्। अत्र स्वभावोक्तिरलङ्कारः, तुषारशिशिरशब्दयोः पर्य्यायतया आपाततः पुनरुक्तताप्रतीतेः परञ्च तुषारवत् शिशिरा इति भेदावगमात् पुनरुक्तवदाभासयानयोरङ्गाङ्गिभावेन सङ्करः। तथा धवलशिला-तलेति धवलपदं वर्णनीयार्थस्य न किञ्चिदुपकुरुत इति "विलोक्य वितते व्योम्नि" इत्यादि दर्पणोदाहृतवत् अपुष्टार्थत्वदोषः, स तु धवलपदपरित्यागेनैव समाधेयः।

(ख) हिमेति। किञ्च हिमं तुषारः हारो मुक्तामाला हरहासः शिवहास्यं तद्वत् धवलास्तैः, उभयतो द्वारपार्श्वद्वये चरद्भिः स्रवद्भिः निर्झरैरेतैभिः, द्वारे अवलम्बितं सन् चलन् चामराणां कलापो यस्यास्तामिवोपलक्ष्यमाणाम्। अत्र चलच्चामरकलापोत्प्रेक्षणाज्जात्युत्प्रेक्षालङ्कारः।

(ग) अन्तरिति। अन्तरभ्यन्तरे स्थापितं मणिमयकमण्डलूनां मण्डलं समूहो यस्यास्ताम्।

(घ) एकान्तेति। एकान्ते एकपार्श्वे अवलम्बिता योगपट्टिका योगसाधनसमयपरिधानाय क्षुद्रपट्टवस्त्रं यस्यास्ताम्।

(ङ) विशाखिकेति। विशाखिकायाः शिक्यायाः शिखरे उपरिभागे निबद्धं संयतं नारिकेलीफलस्य वल्कलमयं धौतं यदुपानद्युगलं पादुकाद्वयं तेनोपेतां विशिष्टाम्।

---

শিলাখণ্ডের উপরে পড়িতেছিল, সুতরাং সেই শিলাখণ্ডের প্রতিঘাতে সেই জলের কতক অংশ পুনরায় উৎক্ষিপ্ত হইতেছিল, এই ঘাত-প্রতিঘাতে সেই জলে বহুতর ফেন জন্মিতেছিল, কোন স্থানে উন্নত পাষাণের অগ্রভাগে সেই জল বিচ্ছিন্ন করিয়া দিতেছিল, তাহাতে শব্দ হইতেছিল এবং হিমের ন্যায় শীতল জল-বিন্দুধারা, আরও ক্ষুদ্র ক্ষুদ্র হইয়া সেই গুহার ভিতরে নীহারের ন্যায় ছড়াইয়া পড়িতেছিল। (খ) সেই গুহাদ্বারের উভয়পার্শ্বে হিম, মুক্তার মালা ও শিবের হাস্যের ন্যায় ধবলবর্ণ নির্ঝরের জল পড়িতেছিল, তাহাতে বোধ হইতেছিল, যেন দ্বারের দুই দিকে ঝুলান কতকগুলি চামর দুলিতেছে। (গ) সেই গুহার ভিতরে কতকগুলি মণিময় কমণ্ডলু স্থাপিত ছিল। (ঘ) যোগ-সাধন করিবার সময়ে পরিধান করিবার উপযুক্ত ক্ষুদ্র একখানি পট্টবস্ত্র এক দিকে ঝুলান ছিল। (ঙ) নারিকেল-

---

(१)...चारुचलच्चामर...। (२) विशाखिकानिबद्ध...। (३)...नालिकेरी ..।